आहन्ति स्म। रक्तधारा-प्लावितवपुः श्रीनित्यानन्दस्तथापि माधवं सानन्दं परिष्वजति स्म। अत्यद्भुतमेतद्दृष्ट्वा जगन्नाथस्य (जगा) साधोरङ्गे रक्तपातः कृत इति पश्यतश्चित्तमद्रवत्। "हरिबोल हरिबोल" इत्यभिदधता श्रीनित्यानन्देन दिव्याङ्गस्पर्शदानेन सादरं संवर्द्धमानौ जगन्नाथमाधवौ भक्तिसुधामास्वाद्य तस्य चरणयोर्लुठतः स्म।

कतिषु दिनेषु गतेषु श्रीगौरः स्वस्वरूपं प्रकाशयन् विष्णुखट्वायामुपविशति स्म। आनन्दध्वनिः श्रीनित्यानन्दः तच्छिरसि छत्रं धरति स्म, कोऽपि चामरं वीजयति स्म, श्रीगदाधरस्ताम्बूलं ददाति स्म। अन्ये च निजवाञ्छानुरूपया सेवया आत्मचरितार्थतां साधयन्ति स्म।

चाँद इत्यभिधानः काजी-यवन-शासकः सङ्कीर्त्तनबाधकः सततं भक्तगोष्ठीमुत्पीड़यन्नासीत्। तस्य दमनं कृत्वा सवंशं तं धर्म्मसेतुर्वीरसिंहः श्रीगौरहरिरुददीधरत्।

एवमतिक्रामति काले एकस्मिन् निशान्ते चतुर्विंशतिवर्षीयः सर्वधुरीणः प्रेमाब्धीन्दुः श्रीगौरः स्वभावमधुरेण प्रेम्णा सर्वान् विमोहयन् शोकसिन्धौ निमज्जयंश्च गृहं त्यक्त्वा गङ्गामुत्तीर्य्य काञ्चननगरं (काटोया) ययौ। माता श्रीशचीदेवी "हा हतास्मीति—हा निमाइ" इति च क्रोशति स्म। श्रीविष्णुप्रिया असूर्य्यम्पश्यापि अन्तर्दाहेन दग्धा वहिर्लुण्ठिता विलपति स्म। श्रीनवद्वीप-पुरी प्रदीपशून्यया चिररजन्या कवलिता केवलमश्रूणि विसृजति स्म। पशवो रुदन्ति स्म, पक्षिणो रुदन्ति स्म, तरवः शोकभारान्नमन्ति स्म, लता लुठन्ति स्म।

गीर्वाणवन्द्यः काञ्चनगिरिः श्रीगौरहरिर्नवद्वीपद्विजराजः काञ्चननगरं गतः सन् तद्दीपयते स्म। तत्रत्याः सर्व्वे अमृतनिधेस्तस्य रूपमाधुरीमास्वाद्य मुग्धाः। स तत्र श्रीकेशव-भारतीमनुनीय मस्तकं मुण्डयित्वा जन्मनोऽवधि चतुर्विंशवर्षस्य माघे मासि तस्मात् सन्न्यासं जग्राह। श्रीकृष्णचैतन्याभिधानो नवीनसन्न्यासी प्रेमोन्मत्तः "हा कृष्ण क्वासी"ति आकुलं गत्वा श्रीवृन्दावनाभिमुखं चलितः। एवं स

राढ़े दिवसत्रयं बभ्राम । भ्रमणकाले श्रीनित्यानन्दस्तमनुययौ, छलेन च तं शान्तिपुरमानिनाय । श्रीअद्वैतस्तद्द्वयं स्वगृहं नीत्वा सानन्दं सोपचारमपूजयत् ।

अनन्तरं प्रभोरादेशात् श्रीअद्वैतचन्द्रः श्रीशचीं नवद्वीपवासिनः सर्वानन्तरङ्गभक्तांश्च निजगृहमानिनाय । सप्ताहाधिकः कालस्तत्र सङ्कीर्त्तननिविड़ानन्दमहोत्सवेन तैर्नीतः । अनन्तरं नवद्वीपवासिनां प्राणप्रियः प्रभुः परमभक्त्या मातरं प्रणम्य प्रदक्षिणीकृत्य सर्वेषां वचांसि विदार्य्य गृहसुखमुखे अनलं प्रदाय च श्रीनीलाचलं प्रतस्थे ।

---

## योग-रहस्यम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—साधनसमरप्रणेता ]

### अनुभूतविषयासम्प्रमोषः स्मृतिः ॥११॥

अथ पञ्चमीं वृत्तिं निरूपयत्यनुभूतेति । अनुभूतविषयस्य पूर्वानुभूतप्रत्ययस्य योऽसम्प्रमोषोऽनपहरणमविलुप्तिरिति यावत्, सा स्मृतिः । पूर्वानुभूतप्रत्ययसदृशप्रत्ययोदय इत्यर्थः । तत्र परमा चरमा च स्मृतिर्ग्रहीतृविषयिणी ब्रह्माहमस्मीति । अपरास्तु ग्रहणग्राह्यविषयाः स्मृतय इति । व्याख्याता द्रष्टृवृत्तिसरूपताः पञ्च, सप्तवृत्तिवादिनः संशयकल्पनाख्ये द्वे वृत्ती वदन्ति, यथायोग्यं प्रमाणादिषु तयोष्वन्तर्भावान्नात्र पृथगुक्तिः । प्रतिनियतं विचारणीयोऽयमाविर्भावो जाग्रदाद्यवस्थात्रयेषु यथायोग्यमेतासां चितिशक्तिप्रवाहरूपाणां वृत्तीनामिति ॥ ११ ॥

## अभ्यास-वैराग्याभ्यां तन्निरोधः ॥१२॥

अथ कथमासां पञ्चवृत्तीनां निरोध इत्याहाभ्यासेति। अभ्यास-वैराग्याभ्यां वक्ष्यमाणलक्षणाभ्यां तन्निरोधस्तासां वृत्तीनां निरोधो भवेदासन्नतम-योग-महिम्नेति भावः। नान्यः पन्थाः कश्चित्तृतीय इति। न च योगस्यैव निरोधहेतुत्वमुक्तमत्र तु तद्विरुद्धं वच इति वाच्यं योगद्वारेणैवानयोर्हेतुतेति। यदासन्नतमो भवति योगश्चित्त-स्योन्मुखोभवति निरोधाय तदैवाविर्भवति लक्षणद्वयमभ्यासवैराग्यरूप-मिति विदुषामनुभूतिः ॥ १२ ॥

## तत्र स्थितौ यत्नोऽभ्यासः ॥१३॥

द्वयोरेव निरोधोपायता दर्शिता तत्र वैराग्यबीजमप्यभ्यास इति मन्वान आदौ प्रधानं निरोधोपायं निरूपयति—तत्रेति। तत्र योगी सत्यज्ञानादिलक्षणे द्रष्टुः स्वरूपे या स्थितिस्तस्यां; यद्वा तत्र स्थितौ तस्मिन् द्रष्टुः स्वरूपावस्थाने यो यत्नः पुनः पुनरवस्थानप्रयासः सोऽभ्यास इत्यर्थः। ब्रह्मविचार इत्यस्य नामान्तरम्। ब्रह्मणि विचरणम् एव विचारो न तु वाचालोचनमात्रमिति दिक्। वृत्तिसारूप्यमापन्नेऽपि द्रष्टरि सच्चित्सुखात्मके स्थितिप्रयत्न एवाभ्यासोपक्रमस्ततः क्रमेण श्रीगुरुकृपाबलेन बुद्धावुपसंहृतात्मबोधस्य समायाति स्वरूपस्थिति-प्रयत्नरूपोऽभ्यास इति सर्वसम्प्रदायानुमोदितो निरुपद्रवः श्रुति-प्रदर्शितः पन्थाः ॥ १३ ॥ ( क्रमशः )

# रजनी

( पूर्वतोऽनुवृत्ता )

[ निबन्धिका—श्रीमती रेणुदेवी ]

अहन्तु प्रतिदिनमेव गृहीत-कुसुमसम्भारा शिवमन्दिरं गच्छामि, किन्तु प्रायशः शचीन्द्रस्य वचनं मे श्रवणपथं नावतरति। यदा तु सौभाग्यप्रकर्षपरिपाकेणामन्दानन्दनिष्यन्दि तत् वचनामृतं श्रोत्रपथेन मे हृदयमवतरति तदा कां कां दशां समनुभवामीति नाद्यापि स्वयमपि निर्वक्तुमलमस्मि। वर्षासु यथा जलभृता जलदा आनन्देन शब्दायन्ते, ममापि तथैव विधानाय मनोरथः प्रावर्त्तत। प्रतिदिनमेव चिन्तितं, तस्मै वितरामि कुसुमस्तवकोपहारम्। किन्तु कदापि न मे वासना चरितार्थतामलभत। प्रथमं तावत् लज्जैव प्रतिबन्धकतामाचरत्। किञ्च मूल्यं दातुं समुद्यते तस्मिन् कथं नु तत् ग्रहीतुं शक्नोमि, कथं वा प्रत्याख्यातुम्? सुतरां दुःखेन गृहं प्रति प्रतिनिवृत्ता पुष्पेण निर्म्मितवती कामपि मूर्त्तिं शचीन्द्रस्य, किन्तु कीदृशी मूर्त्तिर्निर्म्मितेति न ज्ञातं न तु दृष्टेति। किञ्च प्रतिदिवसं मम तत्र गमनेन किञ्चिदचिन्तनीयं फलं समुत्पन्नं तदप्यहं न ज्ञातवती। अथैकदा सन्ध्यासमये माल्यं ग्रथ्नती निद्रिताहं सहसा पित्रोरालपतोः स्वरसंयोगेन प्रबुद्धा श्रुत्वा च मम नाम, कौतूहलेन निद्राव्याजेन निःशब्दा श्रुतवती यन्माता वदति "तर्हि किं स्थिरप्रायं जातम्?" पितावदत् "स्थिरमेव, किं तादृशस्य धनिनो वाक्यं कदापि मिथ्या भवितुमर्हति? अन्धत्वमेवैको दोषः। नो चेदेवंविधा तपोभिरपि न सुलभा। न च तादृशानां वचसि कर्म्मणि च वैषम्यं भवति?" मातात्रवीत् "अपरे कथमेतत् करिष्यन्ति"? पिता समुवाच "एतत्त्वया नावगम्यते यत्ते न वयमिव दरिद्राः, मुद्राणां सहस्रद्वयं तेषामकिञ्चित्करम्। सुतरा-

मिदं दास्यन्ति, किं त्वया नावगतं यत्ते दरिद्रा इव धनं बहुमन्यन्ते। यस्मिन्नेवाहनि लवङ्गलता रजन्याः विवाहप्रसङ्गमकरोत्, ततः प्रभृत्येव सा प्रतिदिवसमेव तस्याः समीपमुपसर्पति। लवङ्गलतया शचीन्द्रः पृष्टः किं कश्चित् धनं गृहीत्वा नयनहीनां परिणयति न वा ? इदमाकर्ण्य रजन्या मनसि सञ्जातं यदसौ करुणया परिणयं मे सम्पादयिष्यतीति। ताञ्च प्रतिदिनमेव गच्छन्तीमवलोक्य परिणयार्थमियमतीव समुत्कण्ठितेति विदित-तदभिप्राया जाता। कथं न वा वयस्यया मया तथा भवितव्यम् ? शचीन्द्रश्च धनेन हरनाथवसुं स्वमतवर्त्तिनं विधाय गोपालमपि सम्मतं चकार। कथं विवाहो न भविष्यतीति ?" जानास्यहं गोपालं; स हि रामसदयस्य कर्मचारिणो हरनाथस्य त्रिंशत्वर्षदेशीयः पुत्रः, वर्त्तते च तस्यैका पत्नी, सन्तानहीना च सा, अतः सन्तानार्थमन्धामपि मां ग्रहीष्यति। धनलोभेन हरनाथोऽपि सम्मतः। धनार्थमेव वयसा विंशतिवर्षदेशीयया कन्यकया सह पुत्रस्य परिणयं सम्पादयिष्यति। धनेन च जातिं स्वायत्तां विधास्यति। पितरौ मम महतानन्देनानन्दितौ बभूवतुः, मम तु शिरसि गगनमिव निपतितम्। परदिने च समवधारितं मया नाहं भूयो लवङ्गलतासमीपं गमिष्यामि, मनसा च शतशो दग्धमुखीति सा तिरस्कृता। लज्जया मरणाय इव मनोरथः समुत्पन्नः। क्रोधेन च लवङ्गलतां प्रहर्त्तुमिव प्रवृत्तिरुत्पन्ना, दुःखेन च समागतं रोदनेन। किं कृतं मया लवङ्गलतायाः यत् सा मां प्रति एतादृशमुत्पीड़नं विधातुमुद्यता। चिन्तितञ्च मया, यदि धनवत्त्वमेवोत्पीड़नसचिवं सुखमुत्पादयति, तर्हि किं जन्मान्धासिनां चिरदुःखभागिनीमपहाय नान्यत् किञ्चिदुत्पीड़नपात्रं समासादितम् ?

भूयश्च मया मनसि निर्द्धारितं, नहि नहि भूयोऽप्येकवारं गमिष्यामि, ताञ्च एवमेव तिरष्कृत्य प्रत्यावृत्ता न निर्गमिष्यामि, न वा करिष्यामि पुष्पविक्रयं, न वा ग्रहीष्यामि तया प्रदत्ताः मुद्राः। यदि जननी तस्यै

समुपहृत्य प्रसूनानि मूल्यमादत्ते नैवमपि ग्रहीष्यामि तेन धनेन संगृहीतमन्नम्। एवञ्चेत् समुत्पन्नं मरणमपि मे श्रेयः। भूयश्च मया चिन्तितम्, एवं कथयिष्यामि किं धनवत्त्वमेव परपीड़नं न व्यभिचरति ? कथयिष्यामि ताम् अन्धेयमिति कृत्वा किं दयापि न समुत्पद्यते ? पृथिव्यामस्यां यस्याः काचिदपि सुखकणिका न वर्त्तते, अपराधमन्तरेणैव तामेवं दुःखभाजनं विधाय कीदृशं ते सुखम् ? एवं यथा यथा चिन्तयामि एवमेवं वक्ष्यामीति, तथा तथा परिप्लाविते मे नयने वाष्पभरेण। मनसि च भयेनैव समुत्पन्नम्—अथ कथनसमये भ्रान्तिः समुत्पन्ना स्यात्।

भूयश्च यथासमयं गतास्मि रामसदयगृहं, कुसुमानि न नेष्यामीति निर्णीतं किन्तु रिक्तहस्ताया गमनमपि लज्जावहं ; किं व्याजीकृत्य वा गमिष्यामि। अतः पूर्ववद् गृहीतवती किञ्चित् कुसुमं किन्तु अद्य मातरमनुक्त्वैव चलितास्मि। दत्तानि कुसुमानि। तिरस्करोमीति तस्याः समीपमुपविष्टा। किन्तु कथं प्रसङ्गः समुत्थापयितव्यः, हरि, हरि! कथमहं प्रारभे ? का प्रारम्भकथा ? यदा सर्वतो वह्निः प्रज्वलति, प्रथमं क्व क्रियतां वारिसेकः। न प्रवृत्ता कापि कथा। विलुप्ता मे कथोपक्रमशक्तिः। समागतमेव क्रन्दनेन।

अथ मे सौभाग्य-योगतः स्वयमेव लवङ्गलतया समुत्थापितः प्रसङ्गः "अन्धे, विवाहस्ते भविष्यति।" अहन्तु ज्वलन्तीव रुषा समभिहितवती "भस्म, भविष्यति।" तया प्रत्यभिहितं "कथमिति ? स्वयं शचीन्द्रनाथो विवाहस्य प्रवर्त्तयिता कथं न भविष्यतीति।" मयापि नितरां जाज्वल्यमानया समभिहितं "कथं, कस्तावद्दोषो मया विहितो युष्मासु ?" तयापि क्रुद्धया प्रत्यभिहितं 'आः ! मरणं ! न किं सम्मतस्ते विवाहः ?' शिरश्चालयन्त्या मया प्रत्युक्तं 'नहि'। लवङ्गलतया नितरां कोपेन लोहितायमानया प्रत्यभिहितम् "आः पापे, कुत इदम् ? कथं न ते रोचते विवाहः ?" मयोक्तम् "अयमेव मे मनोरथः।" मन्ये लवङ्गलतया सन्दिग्धं—भ्रष्टास्मीति। न चेत् कथं विवाहे न सम्मतास्मीति।

सा महता कोपेनाभिभूता "आः मरणं, अहं ब्रवीमि तूर्णमपेहि, न चेत् सम्मार्जनीमार्जनया विताड़यिष्यामो"ति प्रोवाच। अहमुत्थिता। हाभ्यामिव मे निरालोकाभ्यां नयनाभ्यां निर्गतान्यश्रूणि। लवङ्गलताया निगूहमानेव प्रत्यावृत्ता। गृहं प्रति प्रत्यावर्त्तमानया च मया सोपानमासाद्य भूयश्चिन्तितं "हन्त! न मया कापि तिरस्कारकथा प्रवर्त्तिता।" अकस्मात् कस्यापि पदशब्दः समाकर्णितः। अन्धस्य श्रवणशक्तिर्नैसर्गिकीं प्रखरतामासादयति। द्विः त्रिर्वा श्रुतः, स पदशब्दो मे परिचितः कस्यायं पदशब्द इति। तस्मिन् सोपानमार्ग एव समुपविष्टास्मि। स शचीन्द्रनाथः प्राप मे समीपं, दृष्ट्वा च मां तत्र स्थितः। मन्ये विलोकितं तेन मे नयनजलं, पृष्टञ्च "केयं? रजनी?" विस्मृतं मया सर्वं, विस्मृतः क्रोधः, अपमानोऽपि दूरमपयातः, दुःखमपि समतीतम्। केवलं श्रवणयोर्मे ध्वनितमासीत् 'केयं रजनी'ति। न मया प्रत्युत्तरं प्रदत्तं, चिन्तितञ्च "भूयः पृच्छतु, श्रुत्वा शीतलं भवतु मे श्रवणद्वयम्।" तेन पृष्टं "रजनि कथं रोदनपरासि?" हृदयं मे परिपूरितमानन्देन। प्रावर्त्तत तीव्रेण वेगेन नयनयोरश्रुप्रवाहः। भूयोऽपि पृच्छत्विति मयापि मौनमालम्बितं, चिन्तितञ्च मनसि अहो भाग्यवती खल्वहं, विधात्राहं नयनहीना कृता, न वधिरेति। भूयोऽपि तेन जिज्ञासितं, कथं रोदनपरासि, किं केनचित् किञ्चिदभिहितम्? हन्त! यदि तेन सह कथोपकथनसुखं जन्मन्यस्मिन् सकृत् संघटितं, कथमिदं त्यजामि, तस्मादभिहितवती "तिरस्कृतास्मि कनिष्ठया मात्रेति।" अथ तेन किञ्चित् स्मित्वा प्रत्यभिहितं "मैवं कनिष्ठमातुर्वचनं गणयेः। तस्या मुखमेतादृशमेव, किन्तु मनसि न कोपस्तिष्ठति। आगच्छ मया सह, इदानीमेव सा श्रावयिष्यति श्रवणप्रियं वचनम्।" तेन सह कथं न गमिष्यामि। तेनाहूतायाः किमस्ति कश्चित् कोपस्यावसरः? उत्थिताहं, तेन सह प्रवृत्ता च गन्तुम्। स सोपानारोहणे प्रवृत्तः, अहमपि तमनुसृता। तेनोक्तं "न त्वं किञ्चिदपि पश्यसि,

कथं सोपानमारोहसि ? न शक्नोषि चेदहमेव त्वां हस्ते समादाय नयामि।" प्रकम्पितं मे सर्वमेव शरीरं, रोमाञ्चाश्च प्रत्यवयवं प्रादुर्भूताः। गृहीतश्च तेन मे हस्तः। भवतु तेन गृहीतो मे पाणिः। निन्दन्ति चेत् निन्दन्तु लोकाः। व्रजतु मे सफलतां नारीजन्म। अहं हि विनैव कस्यापि सहायताम् अस्या नगर्याः क्षुद्रेष्वपि मार्गेषु समर्थास्मि भ्रमितुम्। किन्तु न तं निषिद्धवती पाणिं गृह्णन्तम्। अयि, भोः, किं कथयामि, कथं वा कथयामि, न प्राप्तास्मि समुचिता भाषाः। तेन गृहीतो मे पाणिः। प्रभातप्रफुल्लेन सरसिजेन दलपरम्परया परिवेष्टित इव मे प्रकोष्ठः। सुग्रथितया 'गोलाप'मालयेव केनचित् परिभूषितो मे हस्तः। अन्यत् सर्वं विस्मृतं मया। मन्ये तदा एक एव मनोरथः समुद्भिन्नः कथमिदानीमेव न मे मरणं भवति। मन्ये तदा द्रवीभूय जलरूपतामिव समासादयितुमैच्छम्। एवमेव मे मनोरथः समुत्पन्नः यदावां प्रसूनयुगलरूपेण एवमेव संश्लिष्टौ कस्मिन्नपि काननपादपे एकस्मिन्नेव वृन्ते तिष्ठावः। अन्यत् यत् यत् प्रादुर्भूतं मनसि न तदिदानीं स्मरामि। अतिक्रान्तायाञ्च सोपानपरम्परायां मम दीर्घेण निश्वासेन सह तेन परित्यक्तो मे हस्तः। पुनरपि मनसि प्रत्याहृत्तं संसारेण। चिन्तया च हृदये दत्तं पदम्। हन्त! प्राणेश्वर, अजानतैव त्वया किमिदं कृतम्? कृतं त्वया मे पाणिग्रहणम्। इदानीमयं जनः त्वया गृह्यतां न वा गृह्यतां, त्वमेव मम स्वामी। अहञ्च ते पत्नी। नहि जन्मन्यस्मिन् कश्चिदन्योऽस्या नयनहीनायाः स्वामी भविष्यतीति। किमस्मिन्नेव समये कस्यचित् दग्धदृग्यश्चक्षुर्निपतितम्? मन्ये तदेव। (क्रमशः)

---

# अभिनय-शैली-विमर्शः

अयि भो नाट्यरसपिपासावासितचेतसः सुमनसः पारिषदाः! प्रत्यहमत्यासङ्गेन समास्वादयन्ति श्रीमन्तः सुप्रयुक्तानां रूपकाणा-मतिमधुरान् रसपरीपाकान्। ये साधारणानां काव्यकुसुमानां रसविशेषानतिवर्त्तमानाः सम्मानमपरिमाणमुरीकुर्वाणाः चीरशर्करा-मधुमोदकादि-विलक्षणं क्षणमूलमिव मधुरतासौभाग्यमङ्गीकृत्य सत्य-मेव सुखसम्भोगि पथ्यभूतमात्मानं प्रत्याययन्ति। अस्ति किल बहुतिथः कालो मधुरमधुरं काव्यसारं समुपेयुषो भारतवर्षस्य, अस्ति चान्येषा-मपि भूयसां जनपदानाम्। तत्र तत्र कति वा शतानि तत्तज्जानपद-भाषामयानि जनिमलभन्त रूपकाणि प्रयोगकौशलानि च प्रभूतगुण-विश्रुतानां कुशीलवानाम्। ये किल कुशीलवा भरतमुनिप्रदिष्टेन मार्गेण स्वां स्वां शिक्षापद्धतिं सुविशुद्धां विदधानाः सर्वेषामेव रसानां समधुरां मूर्त्तिं सामाजिकेषु प्रत्यक्षतया प्रतिपादयन्त इव मानमसा-धारणं समाश्रितवन्तः पर्यचीयन्त। देवयात्रामहोत्सवेषु वा पुत्रादि-परिणयमहानन्ददिवसेषु वा, विविधेष्वपरेषु प्रमोदहेतुसमुपगमेषु वा ते ते नाट्यकुशलाः समाहूताः प्रभूतमानन्दं विकिरन्तो व्यभाव्यन्त।

कियतः कालात् प्रभृति नाट्यकुशलानां कुशीलवानाम् इयमीदृशी प्रतिपत्तिरिति नैव दुष्करं विशेषतः परिज्ञातुम्। प्रतीयते बहुषु ग्रन्थेषु यथा भरतमुनिस्तौर्य्यत्रिकसूत्रकारो निरूपयामास सूत्रम् आभि-नयिकं, तेन खलु त्रिदिवाङ्गनासहायेन 'लक्ष्मी-स्वयंवरण'मित्यादिकानि नाट्यानि प्रायुज्यन्त, सुरराज-सन्तोष-सम्पिपादयिषया पुरतो देवतानां दैवतसभायाम्। यत्र किल 'लक्ष्मी-स्वयंवरण' नाट्यप्रयोगे उर्वशी नाम त्रिदिवसुन्दरी लक्ष्मीभूमिकामास्थितवती पुरूरवसि पूर्वं जातानुरागा

'पुरुषोत्तम' इति पदप्रयोगावसरे 'पुरूरवसि' इति प्रयुञ्जाना परिहास्यतां गता सामाजिकानां स्वीयवस्तुप्रकर्षपरिभ्रंशविदूनेन भरतेन मुनिना समभिशप्ता मर्त्यभूमिमाश्रितवतीति। तदेवं नानाविधविचारसाचिव्येन तदिदं प्रतिपद्यते यन्नाट्यप्रयोगः खलु प्रचरत्यतिपूर्वकालादेव चराचरेऽस्मिन्। सन्तर्पणश्चायं दैवतानामप्यन्तःकरणानामालोच्यमानः सुतराम्। अत एवोक्तं मालविकाग्निमित्रे कविना कालिदासेन 'देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुष'मिति।

अस्ति किल दृश्यते भरतनाट्यशास्त्रे, यदिदं नाट्यं त्रेतायुगावसरे जनिमुपजग्राहेति। यदा महेन्द्रप्रमुखा देवास्त्रयीसमुपदेष्टारं भगवन्तं चतुराननं—'क्रीड़नीयकमिच्छामो दृश्यं श्रव्यञ्च यद् भवेत्। न वेदव्यवहारोऽयं संश्राव्यः शूद्रजातिषु। तस्मात् सृजापरं वेदं पञ्चमं सार्ववर्णिकम्॥' इति प्रार्थयाञ्चक्रिरे, तदैवायं देवाभ्यर्थनापरितोषितः —'एवमस्त्विति तानुक्त्वा देवराजं विसृज्य च। सस्मार चतुरो वेदान् योगमास्थाय तत्त्ववित्॥' नाट्यवेदाख्यस्य च पञ्चमवेदस्य समुत्पादने—'नाट्याख्यं पञ्चमं वेदं सेतिहासं करोम्यहम्।' इति—'एवं सङ्कल्प्य भगवान् सर्ववेदाननुस्मरन्। नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसम्भवम्'॥ तस्य च पाठ्य-सङ्गीता-भिनय-रसनिष्पाद्यतया चतुरो वेदानालोच्य—'जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च। यजुर्वेदादभिनयान् रसानाथर्वणादपि॥ वेदोपवेदैः सम्बद्धो नाट्यवेदो महात्मना। एवं भगवता सृष्टो ब्रह्मणा सर्ववेदिना'॥ इति।

अथैवं स्वेन समुत्पादितस्य पञ्चमस्य नाट्यवेदस्य प्रयोगः किल साधारण-देवादिभिरपि दुष्कर इति चिन्तासन्तानपर्य्याकुलः पितामहः सपुत्रं भरतमुनिं तत्प्रयोगाय समादिशत्। स चापि मुनिर्भरतः स्वीयपुत्रेषु शाण्डिल्यादिषु तत्प्रयोगोपदेशमशेषं सम्पाद्य—'कैशिकी श्लक्ष्णनेपथ्या शृङ्गाररससम्भवा। अशक्या पुरुषैः सा तु प्रयोक्तुं स्त्रीजनादृते'॥ इति भगवन्तं पितामहं परिबोध्य तेन लोकातीतगुणशालिनीना-

प्सरसां सृष्टिमकारयत्, यासां नाम मञ्जुकेशीप्रभृतीनामप्सरसां पितामहसमीपतो लाभाभ्युदयेन भरतो मुनिस्तौर्य्यत्रिकसूत्रकारः कैशिकीमपि वृत्तिमनन्यप्रयोज्यां यथायोगं सामाजिकगोचरीकृत्य निरवद्येन प्रद्योतेन नाट्यवेदं सार्थं विदधे। ऋषिः 'स्वातिर्भाण्ड-नियुक्तस्तु सह शिष्यैः स्वयम्भुवा'। येन खलु ऋषिणा 'जलधरसमय-निपतत्सलिलधारावैचित्र्याभिहन्यमान-पुष्करदलविलसितरचितवर्णा-नुहरणयोजनया यथास्वं वृत्तिनियमेन पुष्करवाद्यनिर्माणं कृतम्'। 'नारदाद्याश्च गन्धर्वा गानयोगे नियोजिताः'।

इत्थमुपजाते निखिलनाट्योपकरणीभूतवस्तुभारसमन्वये सुसम्पन्ने च यथायोगं नाट्यविद्यापरिग्रहे, पितामहेन समुत्सुकेन समादिष्टो भरतमुनिः सम्प्राप्ते 'महेन्द्रस्य ध्वजमहे' महोत्सवमग्नानां त्रिदशानां परितोषणाय 'यथा दैत्याः सुरैर्जिताः' तथा वृत्तमभिनयेन प्रादर्शयत्। [ अस्य हि प्रयोगवस्तुनो नाट्यशास्त्रविषयानुक्रमणिकायां 'दैत्यपराजय' इत्याख्या समुपलभ्यते ] 'ततो ब्रह्मादयो देवाः प्रयोग-परितोषिताः' सर्वाणि ध्वजच्छत्रव्यजनसिंहासनमुकुटादीनि यथास्वं भरतसुतेभ्यः प्रयोगकौशलसम्पादनाय समुपजह्रुः, येषामुपायन-रूपेणाधिगतानां सुतरामानुलोम्येन प्रयोगविधावुपकरणभारविरह-कृता नैव सम्पद्येत लेशतोऽपि रसानुभूतिपराभूतिः सामाजिकानाम्।

ततो नाट्यप्रयोगोपयोगि-मण्डपमन्तरेण समीच्य बहुविधानन्त-रायानाभिनयिकान् भरतमुनिना समभ्यर्थितो भगवान् विश्वनिर्माता निखिलशिल्पकर्म्मकुशलं विश्वकर्म्माणं 'कुरु लक्षणसम्पन्नं नाट्यवेश्म महामते'! इत्येवमादिदेश। 'ततोऽचिरेण कालेन विश्वकर्म्मा महच्छुभम्। सर्वलक्षणसम्पन्नं नाट्यवेश्म चकार सः॥' नियुक्ताश्च भगवता ब्रह्मणा तस्य नाट्यमण्डपस्य परिरक्षणाय 'अंशभागैर्भवद्भिस्तु रक्ष्योऽयं नाट्यमण्डपः' इत्यादेशवचनेन चन्द्रादयो देवाः।

न केवलं दैत्यपराजय-रूपकमेव देवसन्तोषणाय प्रयुक्तं भरतमुनिना,

परमन्यदपि। तथाहि यदा नाम नियमतः प्रयोक्तृभिः कर्त्तव्यं रङ्ग-पूजनमवस्यति स्म, तदा 'आज्ञापय विभो ! क्षिप्रं कः प्रयोगः प्रयुज्य-ताम्' इति पृष्टो भरतमुनिना भगवान् पितामहः 'योजयामृतमन्थनम्। एतदुत्साहजननं सुरप्रीतिकरं तथा। योऽयं समवकारस्तु धर्म्मकामार्थ-साधकः। मया प्रग्रथितो विद्वन् स प्रयोगः प्रयुज्यताम्'॥ इत्यादिशत्। अथ' तस्मिन् समवकारे तु प्रयुक्ते देवदानवाः। हृष्टाः समभवन् सर्वे कर्म्मभावानुदर्शनात्'॥ इति

अनन्तरञ्च कदाचित् स्वीयवस्तुप्रकर्षं महेश्वरस्यापि समीपे प्रति-पिपादयिषन्नब्जयोनिः श्रीमन्तं भरतमुनिं प्रयुक्तपूर्वस्यामृतमन्थनस्य समवकारस्य त्रिपुरदाहनाम्नश्च 'डिम'भेदस्य प्रयोगमादिशत्; तेन च पितामहादिष्टेन अमृतमन्थनं नाम समवकारः 'तथा त्रिपुरदाहश्च 'डिम'संज्ञः प्रयोजितः 'ततो भूतगणा हृष्टाः कर्म्मभावानुदर्शनात्॥ महादेवश्च सुप्रीतः' प्रयोगविधेरसाधारणीं प्रशस्तिं प्राचारयदिति।

तदेवं विविधकलाकौशलमयस्य नाट्यस्य बहोः कालाद् ऊर्द्ध्व-मुन्नव इति सुदृढमेव शक्यप्रतिपादनं भवति। इदं किल नाट्यं न याहच्छिकं नियमपरिहीणमपि प्रयोक्तृभिर्वा सामाजिकैर्वा प्रयोग-गुरुभिर्वा पर्य्यगृह्यत; यथा यथा शास्त्रविधयो नियम-नियन्त्रिता व्यवतिष्ठन्ते, यथा यथा च धर्म्मादिविधयः सम्यगुपदेशमनुरुन्धानाः प्रबन्धमात्मनः समुपलभन्ते, तथा तथैव नाट्यविषयोऽपि नियम-निय-न्त्रिता एव स्वात्मलाभमापद्यन्तेति भरतमुनि-प्रणीत नाट्यशास्त्रादि-विचारेण शक्यमभिज्ञातुम्। स चायं नियमो न केवलमाङ्गिकवाचि-कादिप्रयोग एव नियन्त्रितः, परं मण्डपादिनिर्म्माणे तत्रत्यालेख्यादि-विधानेऽपि समुपलभ्यन्ते भूयांसो नियमा, ये प्रयोगसौष्ठवाय परि-कल्पन्ते।

आदौ तावत् नाट्यानि गीर्व्वाणवाणीमयान्येव प्रथितप्रचाराण्य-भूवन्, अनन्तरञ्च तदनुकारेण भाषान्तरमयाण्यपीति सविशेषमनुक्त-

मपि प्रतिभायात् । यतः क्रियमाणे किल तत्त्वविचारे प्रादेशिक-तत्तद्भाषाद्यपेक्षया बहोः कालात् पूर्व्वमेव स्वतन्त्रः प्रचारः प्रतिपद्यते गीर्व्वाणवाण्याः ।

दूरातीते काले यदा नाट्यमभिनीतमभूत् तदा कीदृशीं रीति-माश्रित्य कुशीलवाः स्वं स्वं प्रयोगं सामाजिकानां गोचरतां नीतवन्तः, कीदृशं वेशमास्थाय प्रयोगसौष्ठवमुदपादयन्, कथङ्कारं पद-परि-वृत्तिञ्च पटपरिस्थितिञ्च समाश्रयन्, कां वा पद्धतिमनुरुन्धानाः सात्त्विक-मवस्थाविशेषमुपादर्शयन्नित्यत्र यद्यपि प्रत्यक्षतो न किञ्चिदपि प्रमाण-मस्माकं प्रतिभासते। तथापि नाट्यशास्त्रनिबद्ध-नियमनिवहानालोच्य, नाट्यग्रन्थेषु तदा तदा भावाभिव्यक्तिनिरूपणं वा समासाद्य, तानि तानि वस्तून्यशेषमुन्नेतुं सुशक्यन्ते। नाट्यप्रयोगस्य तथा तथा पद्धतयः पूर्व्वं स्थिता अपि अन्तरा भारतेऽस्मिन् वर्षे दर्शनादिविद्यायामिव लोकाना-मत्यासङ्गेन स्मरणीयतामिवोपजग्मुरिति विदितमेव पुरातत्त्ववेदिनां विदुषाम्। अत एव दूरातीते काले यथा यथा नाट्यप्रयोगाः कुशलानां कुशीलवानां कौशलेन सामाजिकचेतःसन्तोषमाहितवन्तः, तथा तथा नैव तदानीम्। अनन्तरञ्च वैदेशिक-समुद्यमफलं नाट्योत्कर्षमतिहर्ष-हेतुं परिमृश्य दास्यमिव सुखकामनायाः समुपलभ्य केऽप्यद्यतनाः पुनरपि भारतीयनाट्यकलामुज्जिजीवयिषन्तः प्रादेशिकभाषामयनाट्य-निर्म्माणेन, तथा पटप्रवर्त्तनादि-व्यापारेण नाट्यप्रयोगमुपभोगयोग्यं सुप्रबन्धेन समपादयन्। ततः प्रभृति पुनरपि नितरामनुशीलनं नाट्यकलायाः समजनि जनानन्दनं भारते वर्षे प्राचीनकालसम्भूतानु-त्तमसङ्गीत-कलादि-समन्वयेन। तत्तत्प्रदर्शितरीतिमवलम्बमानाश्च केचन गीर्व्वाणवाणीप्रणयिनः संस्कृतमयमपि समारेभिरे रूपकमभि-नेतुम्।

परन्तु तदा तदा नाट्यवाचां तथा सङ्गीतादीनां यथा दिशा प्रयोगः, सम्प्रति बहोः कालादनन्तरं क्रमेण तत्परिवृत्तिरतिमात्रा समुप-

लच्यते। आदौ तावदस्माकं शैशवे यादृशो दृष्टः प्रयोगो नाट्यानां, यादृशश्चाद्य सन्दृश्यते, तयोर्भूयान् प्रभेदः सूक्ष्मविचारमन्तरेणापि आपातत एव प्रतिभासते। प्रथमे काले नाट्यनिबद्धवचनानां प्रयोगावसरे स्वरविशेषमाश्रित्य कुशीलवाः प्रावर्त्तन्त, क्रमेण स्वरोच्छ्रासप्रभावतो वाचां किमपि लोकोत्तरं माधुर्य्यमुददीप्यत, सामाजिकानां शृखतामेव कोऽपि रसविशेषस्तेनोपायेन प्रस्तुतेन स्वान्तमाक्रामति स्म। स्वभावतो यथास्माभिर्वचनानि प्रयुज्यन्ते, यथा वा स्वभावमनुरुध्य भावाः समुपजायन्ते, ततो विलक्षणं कमपि भावमङ्गीकृत्यैव वेशादौ च भाषायाञ्च तदानीन्तनाः प्रायोगिकाः प्रयोगविधिं व्यापारयन्। क्रमेण यावद् यावद् विवेकवतां कुशीलवानां तत्तद्विषये विशेषतो विचाराः प्रादुरभूवन्, यावद् यावच्च स्वाधीनमार्गमनुवर्त्तमाना जनाः स्वविवेकानुसारेण कृत्यपथे स्वं प्रवर्त्तयितुं सामर्थ्यमाशिश्रियन्, तावत् तावदेव पूर्व्वसिद्धस्य मार्गस्य परिवर्त्तनं स्वात्मलाभेन लोकगोचरतामयासीत्। क्रमेण नाट्यप्रयोगे स्वरपरिहारेण वाचः प्रायुज्यन्त, स्वाभाविकभावोन्मेषणेन नाट्यप्रयोगे अलौकिकताबोधः कुशीलवैरपासार्य्यत, यथा यथा प्रयुज्यमानानां विषयाणामसम्भाव्यताप्रतिपत्तिर्नैव रसपरिस्थितिं विघटयेत्, साधारणलौकिकवृत्तान्त इव प्रयुज्यमानवृत्तान्तः स्वान्तमारूढः कमपि चित्तामोदं विस्तारयेत्, तथा तथैव ते क्रमेण प्रावर्त्तन्त। अलौकिकं भावं लेशतोऽपि स्वाभिनयान्निर्वासयन्तः सुरचारित्रे वा यच्चचारित्रे वा गन्धर्व्वप्रकृतौ वा लोकातीतानामपरेषां स्वभावपरिचये वा मर्त्यसुलभं भावकदम्बकमवतारयन्तः सामाजिकानामनन्तां भ्रान्तिं सम्प्रतिपादयितुं प्राचेष्टन्त, बहुमन्यन्त चामी तरलतरनाट्यरसमधिजिगांसुभिः सामाजिकसम्प्रदायैः। यदा यः खलु नवीनो भावः पदं करोति पूर्व्वसिद्धवस्तुपरिभवेण भुवनाभोगे, यश्च विचारदृशा दृश्यमानो नैव प्रशस्तिमनन्यविलक्षणामभ्युपैति, सोऽपि सम्प्रदायविशेषैरतिप्रकर्षबुद्धया परिगृहीतो भारते वर्षे पदान्तरे वा सञ्जीवतीति दृष्टमनेकशो

लोके, परं नास्य तथा सौभाग्यं नवीनभावस्य, येन निर्विचारमयं सर्वैरेव समुत्कृष्ट इति परिगृह्येत। अस्ति किल भारते वर्षे परःसहस्रा धार्मिकसम्प्रदाया नवनवाः प्रवर्त्तमानाः काले परःसहस्रैराधुनिकैः, तैः कतिपयैराद्रियमाणाः कतिपयैश्च नाद्रियमाणाः समुपलभ्यन्ते। सन्ति च विविधानि दर्शनादिशास्त्राणि विभिन्नं मार्गमनुवर्त्तमानानि, तेषु सर्वेषु नहि सर्वेषामस्ति चित्तानुरागः। तदेवं चिरमेव वर्त्तते लोकानामन्तःकरणिकं वैलक्षण्यं, येन सर्व एव नैकत्र शुभावहे वा अशुभावहे वा पदे रमन्ते। अत एव सन्ति तथाविधे सत्यपि नूतनाभिनयशैलीप्रचारे तादृशाः केऽपि सम्प्रदायाः, ये प्राक्तनीं पद्धतिमेव प्रशस्तां मन्यमानास्तत्रैव प्रकर्षमुत्तरोत्तरं सम्प्रकाशयितुमीहमानाः प्रायोगिकाः समुपलभ्यन्ते। प्राचीनां रीतिमतिनिपुणदृशा विमृष्टामालोचयन्त आपातदृशा परिकल्पितां सरणिमञ्जसा नैव परिग्रहानुग्रहेण कृतार्थयितुं प्रवर्त्तन्ते।

आसीत् किल पूर्वं कुशीलवानां वेशादिपरिग्रहे यादृशः पन्थाः, न तु विमृश्य विमृश्य परिवर्त्यमानः प्रायेण सर्वैरेव उपगृहीतोऽस्ति। आदौ तावत् भूपादिभूमिकामास्थितवतां सर्वेषामेव कटिवर्मादिपरिच्छदः प्रयोगप्रकर्षाय पर्यकल्पत, प्राचीनग्रन्थेषु सत्यपि पुंसां भूषणव्यवहारनिदर्शने स्त्रीणामेव केवलं भूषणशोभा सम्पादिता समपद्यत, न तु भूपतिप्रभृतीनाम्। अद्यत्वे कुशीलवेषु बहुषु प्राचीनशास्त्रादि-रतिसुपगृहीतवत्सु परिच्छदादिपरिवर्त्तनमसाधारणं परिलक्ष्यते। इदं परिवर्त्तनं बङ्गेषु संस्कृतसाहित्यपरिषदेव प्रथमं आहितवतीति परमं गौरवमस्याः प्रचारयितुं न खलु नैव पारयामः। अद्यत्वे भारते वर्षे यावन्ति नाट्याभिनयपदानि दरीदृश्यन्ते, तत्र सर्वत्रैव तथा यथा वेशादिपरिग्रहः सन्तोषयति सामाजिकानामन्तःकरणानीति इदमेव शक्यं विज्ञातुम्। अङ्काद्यवसाने तौर्य्यत्रिकवाद्यमपि पूर्वतो विपरिवर्त्तमानमुपलभ्यते। आदौ तावत् दशैकादशेभ्यो वत्सरेभ्य ऊर्द्ध्व-

मपि यादृशं तौर्य्यत्रिकवाद्यं नाट्यप्रयोगे परिगृहीतमासीत् तदिदानीं बहुत्रैव परित्यक्तमास्ते। बहुभिरेव तौर्य्यत्रिकविविधवाद्यस्थले शङ्ख-घण्टादिसमायोगेन वाद्यकृत्यं सम्पाद्यते। अङ्काभ्यन्तरे दृश्यविभा-गाय पटीपरिवर्त्तनमपि सुतरामाधुनिकम्, तत्रापि प्रतिदृश्यविभागं आलोकनिर्वापणेन पटीसमपसारणं नाम। एवं स्थिते प्राचीनकाला-पेक्षया अद्यतनः किल नाट्यप्रयोगः सुबहुना भेदेनात्मप्रकाशं लभमानः कतिपयेषु बहुमानं कतिपयेषु चावमानमुररीकुरुते।

तदेतयोः पक्षयोः कतरः साधीयानिति विमर्शे बहवो बहुधा प्रत्यवतिष्ठन्ते। यः किल स्वरसंयोगेन चातुर्य्यविशेषमाश्रित्य नाट्य-वाचां प्रयोजकः पक्षः, स किल स्वरविशेषसम्पर्केण वाचां रसोद्भावने सामर्थ्यातिशयं प्रत्येति। यथा किल साधारण एव शब्दसम्भारो यावत् स्वरेणोदीर्य्यते, तावद् यादृशीमान्तरिकीं भावपरम्परामुत्पादयति, न तथा स्वरेण वियुक्तः स इति, अत एव हि पद्यमात्रमेव छन्दसा ग्रथ्य-मानं देशविशेषेषु सौष्ठवान्तरपरिपोषणाय स्वरविशेषसंयोगेन समा-म्नायते। प्रतीतमिदं कदाचित्, यदा परिषदि चण्डकौशिकं नाम नाटकमभिनयार्थं परिगृहीतमभ्यस्यमानमासीत् तदा कालान्तरे च मद्रास्प्रदेशान्तर्गतानां तत्रोपगतानां सुविदुषां केषाञ्चन वाक्प्रबन्धात्। ते हि तदा समुदैरयन्, यत् नाट्याभिनयावसरे सर्व एव श्लोकभागाः कुशीलवैस्तत्र्यैः स्वरविशेषसम्पर्केण रसातिरेकसम्पादनाय परि-पद्यन्ते। अस्मद्देशे तु इदानीं वा पूर्वतो वा तथा तथा रीतिर्नैव समुन्नेतुं शक्यते। काव्यं किल स्वत एव वाक्यान्तराद् विलक्षणां रम्यतामावहति, तदेव यदि स्वरविशेषेण समुदीर्य्यमाणं सामाजिकाः समभ्युपेयुः तदा तेन सामाजिकानामन्तःकरणे रसप्रतीतिरत्युत्तमा पदं कुर्य्यादित्यत्र को वा लेशतोऽपि सन्देहः। अभिनयस्तु स्वाभाविकं भावमङ्गीकुरुतां, मा वा, फलन्त्वस्य सामाजिकसन्तोषणं यदैव दिशा सम्पद्येत, सैव समादरणीयेत्यत्र का वा विप्रतिपत्तिः। अतः स्वरसंयोगेन

समाम्नायमानं प्रयोगि नाट्यं कथं वा हीनं स्यात्, यथा यथा च प्राचीनमार्गानुकरणेन तदीया परिपुष्टिस्तथा तथैव चेष्टितव्यमिति मतममीषाम्। 'पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्। सन्तः परीक्ष्यान्यतरद् भजन्ते मूढः परप्रत्ययनेय-बुद्धिः॥' इति कालिदासकवेरुपदेशं मुख्यं मन्यमानास्तु केचन न तां सरणिमुररीकुर्वन्ति। ते तु वदन्ति, यथा 'नहि वयं संवादेषु वाचां प्रयोगकाले स्वरविशेषमाश्रित्य वाचः प्रयुञ्ज्महे। अतो येषां चरित्रमनुकुर्वन्तो वयं नाट्यमभिनयामः, तेषां वाक्प्रयोगावसरेऽपि कथं वा स्वरविशेषः समाश्रयणीयः स्यात्। यदि स्वरेण वाक् प्रयुज्येत, तदा स्वभावबहिर्भावेण लोकानां तत्र तत्र प्रयोगि अयथार्थता प्रतिभासमाना आपातत एव वृत्तमसदिव प्रतिपादयन्ती रसप्रतीतिं विघटयेत्, अतः सामाजिकानां यथा यथा प्रकृते प्रयोगि स्वाभाविकताबोधो नैव तिरोहितः स्यात्, यथा यथा च सम्भाव्यतां वृत्तस्य भावयन्तस्ते रसोद्बोधेन लोकातीतमानन्दमुपलब्धुं चमेरन् यथा च 'परस्य न परस्येति ममेति न ममेति च। तदास्वादे विभावादेः परिच्छेदो न विद्यते॥' इत्याद्यालङ्कारिकसमुपदिष्टा शैली प्रतिहता न स्यात्, तथा तथैव प्रवर्तितव्यं कुशीलवै'रिति। अत एव सम्प्रदायविशेषैरनुगृहीतस्य स्वरविशेषसाहायकेन नाट्यवचनप्रयोगव्यापारादेः सर्वथा युक्तं परिहाणम्। यथा यथा च अभिनये स्वभावः सम्यगनुकृतो भवति रसोद्बोधश्च सामाजिकानां न प्रतिहन्येत, तथा तथैव प्रवर्त्तनीयं विवेककुशलानां कुशीलवानाम्। तच्च प्राचीनमिदमासीत्, इदं नितरामादरणीयमिति बुद्ध्या प्रवृत्तिश्चेत्, सा सामाजिकैः सुतरां नाद्रियेत, कालक्रमेण सामाजिका अपि प्रकारान्तरमाश्रितवन्तो विभाव्यन्ते। अतो यदि वर्त्तमानसामाजिकपरिस्थितिरनुरोद्धव्या, तदा किमन्यदितो विधेयम्।

वयन्तु नानयोः पक्षयोरेकतरमप्यविचारतः साधीयांसमाकलय्य परिगृह्णीमः, नाप्यविचारतो द्वेषबुद्ध्या कञ्चन प्रयोगान्निर्वासयामः।

परं द्वितीयपक्षेण 'सन्तः परीक्ष्यान्यतरद् भजन्ते' इति समुपन्यस्तं नियम-मङ्गीकुर्व्वाणा एव प्राचीन-नवीनयोः सुसम्बन्धमाशात् सम्पिपादयिषामः। आधुनिकाः किल प्रयोगावसरे वाचां स्वरविशेषं परित्यक्तव्यं मन्यमाना अपि नैव परमार्थतस्तं परित्यक्तुमर्हन्ति। भावाभिव्यक्तिरभि-नयपदेन विधित्सिता चेत् भावभेदेन पदानामुदात्तादि-स्वरभेदसम्पादनं सुतरामपेक्षितमेव चातुर्य्यमर्जितवतां कुशीलवानाम्। यः किल पूर्व्वेण पक्षेणानुगृहीतः स्वरविशेषः, सोऽपि न सामग्र्येण सङ्गीतपदानुकूलं स्वरविशेषमनुहरति, परमेष ततो विलक्षणप्रकारः संवादमात्रसम्पाद्यः प्रयोगविधावुपयोगी। अत एव तस्य तादृशस्य स्वरविशेषस्य वार्त्ताप्रव-र्त्तनावसरे नेच्छतापि परिग्रहणीयस्य किञ्चिद्विशेषतः समालम्बनेन यदि नोत्पद्यते प्रयोगस्य लेशतोऽप्यपकर्षः, परं तादृशस्वरविशेषसम्पर्केण बहुलैव रसानामनभिभवा परिपुष्टिः, तदा को वा विचारचतुरस्ततो विरतिमुपेयात्। आङ्गिकसात्त्विकाभिनयोपस्कारस्तु नवीनसम्प्रदायै-रनुगृहीतः परिपुष्णात्येव सुचेतसामान्तरं रसपरीपाकमिति तत्र वयं नवीनमतानुप्रवेशं नितरामनुरुन्ध्याम। आहार्य्यप्रयोगोपस्कारोऽपि पूर्व्वत एव सगर्व्वमपूर्व्वतया प्रचारितः परिषत्पक्षेणेति तत्रापि वय-मनुरागिण इति नोक्तमप्युपतिष्ठेत। तदिदं सारभूतं प्रत्येतव्यं यत्, प्रयोगावसरे वाचां कोऽपि स्वरभेदः समादरणीयः, यः खलु साकल्येन नैव पर्य्येति सङ्गीतपदानुकूल्यं, नापि समुपचिनुयात् प्रतिपाद्यरसप्रति-बन्धम्। आङ्गिक-सात्त्विकाहार्य्याणां पुनरनुसन्धेयं नवीनमार्गेण परमोत्कर्षसम्पादनमिति समासेन वयमिदानीमिदमेव वदामः, कालान्तरे पुनरधिकमाविवेदयिषामः॥

———

# सन्देशाः

**शिक्षायां ब्राह्मणमहासम्मेलनसिद्धान्तः**—वर्त्तमाने संवत्सरे शारदीयपूजावकाशे पुण्यभूमौ वाराणस्यां निखिलभारतवर्षीय-ब्राह्मणमहासम्मेलनं समजनिष्ट। तत्र नानाविषयानधिकृत्य विचाराश्च सिद्धान्ताश्च सम्मिलितैः पण्डितैश्च धर्म्माचार्य्यैश्च तदनुगतैरपरैश्च साधुतया व्यधायिषत। तत्र शिक्षाविषयं सिद्धान्तमद्य श्रीमतां वाचकमहाभागानां पुरतः समुपहरामः;—

अस्ति किल भारते वर्षे बहोः कालात् प्रभृति वैकल्यं वर्णाश्रमधर्म्मस्य। वर्णाश्रमिणः सर्वे एव प्रायेण पूर्वपुरुषाचरितानाचारानशेषतः पालयितुं नेच्छन्ति, नापि शक्नुवन्ति। सत्यपि तत्र तच सामर्थ्ये परमौदासीन्यमेवात्र वर्णाश्रमिणां दरीदृश्यते। तदत्र को हेतुरिति विचारे केवलं पूर्वकालीनशिक्षाविलक्षणा साम्प्रतिकी नवीना शिक्षैव हेतुकोटिमधिरोहति। तदस्याः शिक्षाया रीतिपरिवर्त्तनार्थं तथा कोऽपि समपेक्षितो विद्यालयो नाम, यत्र सम्भाव्येत सुपरिग्रहो विश्वासामेव विद्यानाम्। अद्यत्वे प्रतीच्यरीतिमनुरुन्धाना विद्यापरिग्रहशैली यथा यथा वासयत्यन्तःकरणानि विद्यार्थिनाञ्च गृहीतविद्यानाञ्च तदितरेषाञ्च, तथा शैली यद्यपि नानुगृहीता सुपरिग्रहेण प्राक्तनैस्तथापि एकस्यैव बहुविद्यापरिग्रहः कालानुरोधेन कर्त्तव्यपदवीमध्यास्ते। तत्र पुनरयं विशेषः, यदु एकस्य विषयस्य विशेषतः परिग्रहः सामान्यतश्चापरेषाम्। एवं कृते एकत्र गभीरे पाण्डित्ये सत्यपि यदद्यतना विषयान्तरवेदिनः प्राच्यपण्डितानधिक्षिपन्ति, स्वैरुपस्थापितानां विषयविशेषानामतिसमीचीनं समाधानमेभ्यो नाप्नुवन्तो विषीदन्ति तदतिदूरापेतं स्यात्। शक्या च सन्दर्शयितुं वस्तुतः कदाचित् सर्वासुत्कर्षसीमासुपगतस्य भारतवर्षस्य प्राच्यविद्यासमुत्कर्षकृता लोका-

तीता प्रशस्तिः समुन्नतिश्च नामशेषतामिव समाश्रितस्य वर्णाश्रमधर्म्मस्येति ।

सर्वमिदमालोच्य वाराणसीधाम्नि 'निखिलभारतवर्षीय—ब्राह्मण-महासम्मेलन'—परिषदा कृतः सुमहान् परिकरो वाराणस्यां कमपि 'संस्कृतविश्वविद्यालयं' प्रतिष्ठापयितुम्। तत्र भारतीयप्राच्यप्रथामनुसृत्य चत्वारो वेदाः षड् वेदाङ्गानि पुराणं धर्म्मशास्त्रं तर्कशास्त्रं मीमांसाशास्त्रञ्चेताश्चतुर्दश-विद्याः प्रतिपाद्येरन्। नृत्यगीतचित्रशिल्पादि-विद्या अपि प्राच्ये काले सुप्रतिष्ठाः साम्प्रतिकैः सुतरामपेक्षिताः प्रतीच्य-कालोपयोगिन्यः परिग्राह्येरन्। तासां विद्यानां प्रतिपादनञ्च वाराणसीस्थे महाविद्यालये संस्कृतभाषया हिन्दीभाषया च विधीयेत, तदीयशाखारूपेण प्रतिष्ठापितेषु च देशान्तरीणमहाविद्यालयेषु प्रादेशिक-तत्तद्भाषाभिरिति निरदिश्यत। यथा चात्र सार्ववर्णिका एव यथायोगं विद्यां परिगृह्य जीविकोपायमुपेयुस्तथैव शिक्षायाः पद्धतिः सुनिबद्धा भवेत्।

अपरश्चात्र विशेषो यथा, अद्य यावद् येषु बहुषु पदेषु विद्याया अभ्युदयाय यावन्तो विद्यालयाः प्रत्यष्ठाप्यन्त, तत्र सर्वत्रैव स्वसम्पाद्यसम्पद्-व्ययानुरूपा विद्या समधिगम्यते विद्यार्थिभिरिति दृष्टचरमास्ते, प्रस्तुते विद्यालये पुनरतिदीना अपि यथा सुखेन विद्यामधिगच्छेयुस्तया च स्वीयां जीविकामुपगन्तुमर्हेयुस्तथा नियमो विधातव्य इति। प्रत्येकमेव वर्णानामद्यत्वे दारिद्र्यमेव प्रतिबध्नाति सर्वाणि श्रेयांसि, सर्वाणि च काम्यजातानि। सनातनधर्म्मिणः सर्वे कमुपायमवलम्बमानाः संसारे विहरन्तो धर्म्मरक्षायामपि समर्थाः स्युः, दारिद्र्येण पीड़िताश्च नैव कृत्यमार्गादन्यत्र गच्छेयुस्तया तथैव निर्देशाय परिचालकसमितिः सर्वथा स्वां चिन्तां प्रवर्त्तयेत। तदर्थञ्च विभिन्नेषु पदेषु शाखासमितयो व्यवस्थापनीयाः, तत्र तत्र तद्द्वारेण च विचारः प्रवर्त्तयितव्यो यथा मनोरथोऽयं फलेन सुमण्डितः कल्पनामात्रसारो न स्यादिति।

'ब्राह्मणमहासम्मेलन' परिषदा परिगृहीतान्युद्देश्य वस्तूनि संक्षेपतः पाठकमहोदयेषु समुपक्षिप्यन्ते, यथा—विशेषां वर्णानां दारिद्र्यदूरीकरणोपायनिर्णयः (१), स्वास्थ्यरक्षणम् (२), अनाथरमणीनां विशेषतो विधवानां जीविकादिव्यवस्थाविधानम् (३), सर्वेषां वर्णानां धर्माचारादिसंरक्षणम् (४), गोरक्षणम् (५), समाजप्ररूढ़पापाचारविनिवर्त्तनम् (६), विभिन्नेषु सम्प्रदायेषु परस्परं मैत्रीस्थापनम् (७), कोऽपि सनातनधर्म्मी यथा पथिभ्रंशेन पतितो न स्यात् तदुपायनिर्णयश्च (८) इत्येतानि। प्राधान्येन खल्वेत एव विषया उद्देश्यभूता 'ब्राह्मणमहासम्मेलन' परिगृहीता इति 'बङ्गवासी'नामकपत्रिकापर्य्यालोचनादधिगम्यते। परमत्र प्राच्यरीतिमनुरुध्य शिक्षाप्रवर्त्तनस्य सविशेषो निर्देशो नास्तीति सदुःखमावेदयामः। यदि सनातनधर्म्मस्य रक्षा कर्त्तव्या स्यात्, यदि च बहुलधर्म्मविपत्तिविनिवर्त्तनमभिमतं स्यात्, तदा येन बीजभूतेन पदे पदे धर्म्मव्यापत्तिरस्माकमुत्पाद्यते, तदेव समपसारणीयं भवति। तदिदं बीजभूतं वस्तु प्राच्यरीतिपरिहारेण साम्प्रतिकी शिक्षा नाम। अस्ति किल शिक्षाया एतावान् प्रभावः यत्, स्वाभाविकपरिस्थितिं विघटय्य नवीनां रीतिमुपानयति इति। अतो या नाम शिक्षा स्वाभाविकपरिस्थित्यनुगुणा यस्मिन् देशे, सैव परमोपकाराय परिकल्पते, नान्या, अतः प्राधान्येन शिक्षायाः सुव्यवस्थासम्पादनमेव 'महासम्मेलन'परिषदः सर्वथा कर्त्तव्यम्। एवं कृते अनुषङ्गसिद्धमेव सम्पद्येत धर्म्मपरिस्थितिपरिपालनं सविशेषविज्ञानसम्पदां वृद्धिश्च। अथेदानीं शिक्षाया हेतोः स्थापनीयस्य महाविद्यालयस्य प्रतिष्ठार्थं महान् किल प्रयत्नो वर्त्तते 'सम्मेलन'परिचालकानाम्। श्रूयते नातिचिरमेव तदर्थं कलिकातानगरे 'शिवकुमार-भवने' सारदापीठाधिपतीनां महामान्यशङ्कराचार्य्यमहाराजानाम् आध्यक्ष्येण कापि सभा सम्मिलिता तद्विषयमधिकृत्य विचारं करिष्यति, तदनुसारेण च स्वर्गतानां स्वधर्म्मनिष्ठानां कालीप्रसन्नसिंहमहोदयानां भवने महती कापि समालोचनसभा

समाहृता भवेत्। यथाकालमनयोः सन्देशदानाय वयं सन्नद्धा एव वर्त्तामह इति।

**मासिकसभा**—विदितमस्तु पारिषदानां यथा वर्त्तमानमासस्य अष्टाविंशदिवसे सायं सार्द्धषष्ठघटिकायां परिषदः एतद्वर्षीयं पञ्चमं षष्ठञ्चाधिवेशनं सुसम्पन्नमिति। तत्र श्रीयुक्त-वसन्तकुमारराय-विद्यारत्नस्य 'संस्कृतवर्णलेखविमर्श' इति-नामधेयः श्रीयुक्त-वेणुधर-तर्कतीर्थस्य 'यमपुरोपर्य्यटनम्' इति नामधेयश्च प्रबन्धौ पठितौ। द्वयोरेवानयोः प्रबन्धयोः समालोचनया समालोचकाः प्रकर्षमसूचयन्नतिमात्रम्। तत्र 'यमपुरोपुर्य्यटनम्' इति-नामकः प्रबन्ध एतत् संख्यायामेव समुपक्रियते प्रियपारिषदेभ्यः। अन्योऽपि परतः समुपहरिष्यते।

## प्रार्थना

प्रिय पाठकमहाभागाः! प्राप्तकालमद्य यत् किञ्चिदावेद्यते, तत्र भवतां सकरुणा दृष्टिरास्ताम्। गम्भीरार्थनिबन्धराहित्यं नाम सुतरामगौरवं पत्रिकायाः। दौर्भाग्येन तदेवेदानीमगौरवं समापतितप्रायमस्याः संस्कृतपत्रिकायाः। वह्वोः कालात् प्रभृति महतां सुविदुषां लेखलाभसौभाग्यमभुञ्जाना किल परिषत्पत्रिकेयं म्रियमाणेव कथञ्चिदात्मानं धारयन्ती कस्य वा सचेतसो नोत्पादयति दयावकाशम्।

तदद्यापि यदि भवन्तो नानुकम्पेरन्, तदा क्वैव परिस्थितिरस्याः स्यादिति न जानीमहे। बहव एव भवत्सु नास्या नावस्थां समधिगच्छन्ति, परमस्याः उत्तरोत्तरं नैबन्धिकमुत्कर्षं सम्पादयितुं समर्था अपि यदि भवादृशा एव समुदासते, तदा कः पन्थाः परिषदः सञ्जीवनस्येति प्रकाशमेव वयं वदामः। तदनुकम्पया क्रियतामत्र प्रसादः, च्योयतामवसादः किलैतस्या महाजनपरिपूजितायाः पत्रिकाया इति।

---

१८४९ शकीये फाल्गुने

Reg. No. C. 1073.

१०म-वर्षस्य ११श-संख्या

March 1928

Vol. XI, No. 11.

# संस्कृतसाहित्यपरिषत्

संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम्

## पशुपतिसंख्या

सम्पादकः—श्रीकालीपदतर्काचार्य्यः

सह-सम्पादकः—श्रीदुर्गामोहनभट्टाचार्य्यः एम्. ए.

কেশরাশিকে কুঞ্চিত ও কোমল করিবার জন্যই

# কেশ-রঞ্জন তৈল—

এই আসমুদ্র ভারতের সর্ব্বত্র কেশরঞ্জনের শতমুখে সুখ্যাতি। নিত্য স্নানকালে কেশরঞ্জন মাথায় মাখিলে সমস্ত দিনটী চিত্ত প্রফুল্ল থাকে ; কেশ-রঞ্জন নিত্য মাথায় মাখিলে মাথা ধরা, মাথা ঘোরা, অনিদ্রা, মন হু হু করা প্রভৃতি উপসর্গ বিদূরিত হয়। দেশের রাজা মহারাজা হইতে সামান্য গৃহস্থ-গৃহেও কেশরঞ্জনের সমাদর। আপনিও ব্যবহার করুন। মূল্য প্রতিশিশি একটাকা, ডাকব্যয় সাত আনা।




## স্নায়বিক দুর্ব্বলতার আশু প্রতিকারক

# সঞ্জীবন রসায়ন

বলবর্দ্ধক, মেধাবর্দ্ধক ও স্মৃতিবর্দ্ধক মহৌষধ

স্নায়বিক দুর্ব্বলতার জন্য যাঁহাদের উদ্যম, উৎসাহ, স্ফূর্ত্তি ও স্মৃতিশক্তি বিনষ্ট হইয়াছে, জীর্ণ, অগ্নিমান্দ্য প্রভৃতি গ্লানিকর উপদ্রব উপস্থিত হইয়াছে, তাঁহাদের পক্ষে "সঞ্জীবন রসায়ন" অমৃতের ন্যায় উপকারী। বিশেষতঃ ইহা দ্বারা বমন, উদ্গার, হিক্কা, আধ্মান (পেট ফাঁপা) ও পেট ভুটভাট করা প্রভৃতি পেটগরমের উপদ্রবসমূহ অচিরে নিবারিত হইয়া থাকে। এক কথায় বলিতে হইলে, অজীর্ণ, অগ্নিমান্দ্য, ও স্নায়বিক দুর্ব্বলতা নিবারণ জন্য এবং ছাত্রগণের মেধাবৃদ্ধি করিতে "সঞ্জীবন রসায়নের" ন্যায় অব্যর্থ ঔষধ অতি বিরল। এক শিশির মূল্য ১৲ টাকা, মাশুলাদি ৶০ আনা।

পরিবর্ত্তিত **সচিত্র কবিরাজি শিক্ষা** পরিবর্দ্ধিত

## শ্রীযুক্ত নগেন্দ্রনাথ সেনগুপ্ত প্রণীত

সমগ্র আয়ুর্ব্বেদ শাস্ত্রের সার সঙ্কলন। বড় বড় আটটী খণ্ডে সমগ্র পুস্তক বিভক্ত। অতি সরল ভাষায় লিখিত হওয়ায়, কেবল চিকিৎসকের নয়—সাধারণ গৃহস্থের পক্ষেও এই কখানি নিত্য ব্যবহার্য্য গ্রন্থ। নাড়ীপরীক্ষা হইতে আরম্ভ করিয়া সমস্ত রোগের নিদান, চিকিৎসা-প্রণালী, আয়ুর্ব্বেদীয় ঔষধ, তৈল ও ঘৃতাদি প্রস্তুত-বিধি, বিষচিকিৎসা, দীর্ঘজীবন-লাভের উপায়স্বরূপ স্বাস্থ্যকারক স্থানসমূহের পূর্ণবিবরণ, রোগীর পরিচর্য্যা এবং দ্বিতীয়খণ্ডে মহর্ষিদের গৌরবস্বরূপ—"সুশ্রুত-সংহিতা" এই সংস্করণে সন্নিবেশিত হইয়াছে। মূল্য ২৷৷০ টাকা, ডাকমাশুল ও প্যাকিং ৷৵০ বার আনা।

কবিরাজ নগেন্দ্রনাথ সেন এণ্ড কোং লিমিটেড

[illegible] লোয়ার চিৎপুর রোড, কলিকাতা।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४९ शकीये फाल्गुने १०म-वर्षस्य ११श-संख्या


## पशुपतिनाथशास्त्रिणः स्वर्गप्राप्तौ परिदेवनम्

[ निबन्धकः—महामहोपाध्यायः श्रीप्रमथनाथतर्कभूषणः ]

त्वयि पशुपतिनाथ स्वः प्रयाते नितान्तं
परिषदियमिदानीं भ्रष्ट-कान्तिर्विसंज्ञा ।
दिशि दिशि बुधवृन्दं साश्रुधाराचियुग्मं
स्मरदमलगुणांस्ते रोदिति चिप्तचित्तम् ॥ १

दाक्षिण्योल्लसिता वितीर्णविनया शास्त्रेष्वकुण्ठा मति-
र्गाम्भीर्य्येण युता तथा व्यवहृतिः सर्वत्र शान्तिप्रदा ।
कान्तिः सर्व्वदृशां सुतृप्तिजननी वाणी सुधास्यन्दिनी
त्वय्यस्तं सहसा गते पशुपते याता कथाशेषताम् ॥ २

दीनैषा परिषत् त्वया विरहिता मग्ना विपद्वारिधौ
यस्या जन्मदिनाद् भवान् पशुपते स्निग्धः पितेवान्वहम् ।
उत्कर्षं परिपालनं सुमहतीमृद्धिं विधातुं नवा-
मा प्राणात्ययमुद्यतोऽभवदियं कस्माद् वदोपेक्षिता ॥ ३

परिषदुदयहेतोः क्लेशबाहुल्यमुच्चै-
रविरतमनुभूय स्वर्गतस्त्वं त्वकाले ।
त्वदमलगुणजालैर्मुग्धचित्ता वयं ते
त्रिदशपुरि सुरेन्द्राच्छान्तिमभ्यर्थयामः ॥ ४

---

## पशुपति-प्रयाणम्

[ निबन्धकः—वाराणसेयः श्रीहरिहरशास्त्री ]

अयि मित्र पवित्रकर्म्मणा विदधानो निजदेशमङ्गलम् ।
गतवानसि नामशेषतां सहसा हन्त सहस्रसद्गुणः ॥ १
चिरमेव चरित्रचारुता-गुणतस्त्वं सकलादृतोऽभवः ।
भवदीयशरीरशोभया न च कस्य प्रसभं हृतं मनः ॥ २
अपि संस्कृतभारतीरतिर्विदिता विश्वजनेन तावकी ।
कृतवानसि देहपातनं भुवने तन्महिमप्रकाशने ॥ ३
अभवत् तव काप्यभिज्ञता भृशमध्यापनकर्म्मसु ।
इह यद्बलतो वशीकृतो बहुविद्यार्थिगणो गुणोज्ज्वलः ॥ ४
विविधश्च निबन्धसञ्चयं विरचय्य प्रतिभाविभासितम् ।
परितो हरिदङ्गनामुखे परिलिप्तं भवता स्मितं यशः ॥ ५
बत पाशुपते समागते विरहे सम्प्रति शोचनीयताम् ।
समवाप्य चिराय वर्त्तते स च **दुर्गाचरणो** निराश्रयः ॥ ६
त्वयि देव तिरोहिते पुनर्ननु **कालीपद**-सौम्यता गता ।
अपि निष्पतितोऽस्ति **गीष्पति**र्बत शोच्यासु दशासु सम्प्रति ॥ ७
त्वमभूरिह भूरिसज्जनैरभिनन्द्यो वसुधासुधाकरः ।
कुमुदं नितरां विकाशयन् स्वकलाभिः सकलाभिरञ्जसा ॥ ८

निदधे परिषच्चकोरिका त्वयि तृष्णाकुललोचनाञ्चलम् ।
द्विजराज तिरोहितश्चिरं कथमाकालिकमेघडम्बरैः ॥ ९

चिरदुःखतमोभिराहृतास्त्वदभावं हि सहामहे वयम् ।
अधुना परिशोभसे शुभां न च विद्मः कतमां भुवं गतः ॥ १०

---

# परलोकगतस्य पशुपतिनाथशास्त्रिणः

## संक्षिप्तः परिचयः

[ निबन्धकः—श्रीरामकृष्णचक्रवर्त्ती, एम्-ए. ]

दुर्भाग्यवशादेव भारतवर्षीयाणां, विशेषतो वङ्गीयानां सनातनहिन्दु-धर्म्मावलम्बिनामस्माकम् अकाल एवासम्पादित-कार्य्यबहुलोऽसौ पशुपतिनाथशास्त्रिमहोदयः कालग्रासनिपतितोऽभूत् । धर्म्मैकसम्बले दुःखदैन्यग्रस्ते आधुनिकब्राह्मणपरिवारविशेषे एव जातोऽप्यसौ विद्यया शक्त्या चारित्रमाधुर्य्येण धर्म्मप्राणतया च सर्व्वेषामेव प्रीतिभाजनमभूत्; साहायकविशेषालाभेऽपि स्वकीयेन गुणगरिम्णा, स्वकीयपाण्डित्यप्रभावेण चासौ परामुन्नतिमधिगम्य सांसारिकमर्थक्लेशादिकमपनीय सर्व्वेषु सत्कर्म्मसु आत्मानं नियोजितवान् । देशस्य, समाजस्य, स्वधर्म्मस्य चोन्नतिविषये संरक्षणविधौ चासौ प्रयत्नविशेषसम्पन्नः सदोत्साहश्चाभूत् । आङ्गलविद्याशिक्षितोऽपि स्वधर्म्माचारनिष्ठः, अनेकभाषाभिज्ञोऽपि पाण्डित्यप्रख्यापनयत्नहीनः, कार्य्यबहुलप्रपीड़ितोऽपि कर्त्तव्यपरायणः स्वकर्म्मनिरतश्च, प्राच्यपाश्चात्त्योभयादर्शनिष्कर्षैकलक्ष्यः, सदोत्फुल्लवदनोऽसौ वृद्धानां गुरुजनानाञ्च स्नेहस्थानं, प्रौढ़ानां समानवयसाञ्च प्रीतिपात्रं, यूनां बालानाञ्च भक्तिभाजनमभूत् । तस्याकालमहाप्रयाणेन सर्व एव नितरां दुःखिताः शोकविशेषभाजश्च, तस्य परिचयविशेषज्ञाने नितरामुन्मुखा इति संक्षेपेण यथाज्ञानं किञ्चिदुच्यते ।

## वंशावली

- ✓राधामोहन-तर्कसिद्धान्तः
  - ✓शिवचन्द्र-विद्यारत्नः
    - ✓श्यामानाथ-सिद्धान्तवागीशः ( पत्नी—श्रीमती मोचदा-देवी )
      - श्रीमती यज्ञेश्वरी देवी ( विधवा निःसन्ताना च )
      - ✓अनरनाथ-विद्याविनोदः
        - श्रीमान् अशोकनाथ-भट्टाचार्य्यः एम्-ए ( २४वर्षीयः )
          - १ पुत्री
      - ✓पशुपतिनाथ-शास्त्री ( पत्नी—श्रीमती प्रभावती देवी)
        - ✓निरुपमा देवी
        - श्रीमान् गौरीनाथ-भट्टाचार्य्यः ( १९वर्षीयः )
        - श्रीमती अनुपमा-देवी (पतिः—श्रीमान् सत्येन्द्रनाथ-भट्टाचार्य्यः)
          - २ पुत्र्यौ
        - श्रीमती मनोरमा-देवी (पतिः—श्रीमान् जीवनकुमार-भट्टाचार्य्यः)
          - २ पुत्रः
        - श्रीमान् कैलासनाथ-भट्टाचार्य्यः (१२वर्षीयः)
  - ✓ताराकिङ्कर-भट्टाचार्य्यः
    - १ पुत्री
      - ५ पुत्राः

कुलोपाधिः—भट्टाचार्य्यः। गोत्रादिकम्—यजुर्वेदीयघृतकौशिकगोत्रम्; कुशिककौशिक-घृतकौशिक-प्रवरम्।

अकालपरलोकगतस्यास्य महात्मन इदानीं वृद्धा जननी, पत्नी, एका स्वसा, द्वौ पुत्रौ, द्वे तनये, एको भ्रातुष्पुत्रः, एको दौहित्रः, द्वे दौहित्र्यौ, अपरे च बहवः स्वजनाः शोकसन्तप्ता विद्यन्ते। पुत्रयोरेको विवाहितः ऊनविंशतिवर्षीयः, प्रेसिडेन्सी-महाविद्यालये बि. ए. श्रेण्यामधीयानः; अपरश्च त्रयोदशवर्षदेशीयः, महाराज-काशिमबाजार-पलिटेक्निक्-विद्यालये तृतीयश्रेण्यामधीते। भ्रातुष्पुत्रस्तु विगते वर्षे एव कलकत्ता-विश्वविद्यालयात् एम्. ए. परीक्षायां संस्कृतविभागे प्रथम-श्रेण्यां प्रथमं स्थानमलमकरोत्, आङ्गलसंस्कृतभाषयोः सुपण्डितोऽसौ आइ. ए. बि. ए. परीक्षयोरपि तथैव प्रथमं स्थानमलङ्कृत्य वृत्तिपदकादिकमलभत।

## पितृवंशः

पुरुषानुक्रमेणैव पाण्डित्यं कुलेऽस्मिन् सुप्रतिष्ठितं, पाण्डित्य-प्रभावादेव ब्रह्मत्रभूम्यादिकमुपभुञ्जानाः सुखेनैव संसारयात्रां निर्वाहितवन्तोऽस्य पितृपुरुषाः। परन्तु पितामहोऽस्य ज्ञातिकलहवशात् धर्म्माधिकरणशरणः सर्वस्वहीनोऽभूत्।

पिता—जनको ह्यस्य ⁄श्यामानाथभट्टाचार्य्य-सिद्धान्तवागीशः महता कष्टेन नष्टसम्पदमंशत उद्धृतवान्, परन्तु ततोऽपि संसारयात्रा अनिर्व्वाह्येत्यवलोक्य स कलकत्तामागत्य पौरोहित्यकर्म्मणि प्रवृत्तोऽभूत्। तदापि स्वपरिजनानां निवासो हरिनाभीत्याख्ये पल्लीग्रामे एवासीत्, ततः परमेव कलकत्तास्थं गृहादिकं तेनैव कृतम्। स तु महात्मा देवप्रकृतिः स्वधर्म्मनिष्ठश्चासीत् १३१८ वङ्गाब्दीये कार्त्तिके मासि चासौ परलोकं गतवान्।

माता—जननी ह्यस्य श्रीमती मोक्षदा देवी सप्तसप्ततिवर्षीया, उभयोरेव कुलप्रदीपयोः पुत्रयोरकालपरलोकगमनं कथमपि सहमाना

जड़वदेवाधुनावतिष्ठते ; इतःपूर्व्वं तु इयं संसारपरिचालनसुदक्षा निपुणा गृहिणी आसीदिति सुविदितमेव बहूनाम् ।

ज्येष्ठा स्वसा—शास्त्रिणो दशवर्षेभ्यो गरीयसी भगिनी श्रीमती यज्ञेश्वरी देवी विधवा सन्तानहीना च चिरमेव दुःखमुपभुञ्जाना भ्रात्रोरभावात् शोकसागरनिमग्ना तिष्ठति ; सा तु सुनिपुणा संसार-परिचालनसुदक्षा च ।

भ्राता—शास्त्रिणोऽष्टवर्षेभ्यो ज्यायान् सोदर्य्यः ✓अमरनाथविद्याविनोदः ब्राह्मणवृत्त्यवलम्बी सदाचारः सुधीश्च विदितचर एव आसीद् बहूनां विद्वद्वरेण्यानां विविधसामाजिकानाञ्च ।

## मातामहवंशः

मातामहः—वाराणसीप्रवासी सुप्रसिद्धः ✓कालीकुमारवाचस्पतिरेवास्य मातामह आसीत् ।

मातुलाः—मातुलेषु एक एवाधुना वर्त्तते ; पण्डितप्रवरः स्मार्त्तकुलप्रदीपः श्रीजयकृष्णविद्यासागरस्त्वसौ वाराणसीनरेशस्य सभा-पण्डितः सुप्रसिद्ध एव ।

## जन्मसमयादिकम्

जन्मसमयः—१२९१ वङ्गाब्दीये चैत्रस्य १९श-दिवसे मङ्गलवासरे १३।४८।५२।३० अनुपलपरिमिते समये कृष्णप्रतिपदि तिथावभूदस्य जन्म । [ आङ्गलमते तु १८८५ खीष्टाब्दीये मार्च्चमासस्य ३१श-दिवसे ११।३० ।]

जन्मस्थानम्—कलकत्तायाः सप्तसु क्रोशेषु २४ परगणाजिलास्थो हरिनाभीत्याख्यो ग्रामोऽस्य जन्मभूमिः ।

## बाल्यकालः

अतिधीरोऽप्ययं बाल्ये चञ्चलप्रकृतिरप्यासीत्, दृश्यते च बहूना-

मेव सुधीराणां बाल्ये बालस्वभावसुलभं चापल्यम्, वयोलाभे च तद्वैपरीत्यम्, शास्त्रिणोऽपि तदेवाभवत्। समधिकवयसोः पित्रोः पुत्रोऽसाविति आदरविशेषभागभूत् सर्वेषाम्; आसोच्चास्याजीवनं पशुपक्षिप्रीतिविशेषेण, धेन्वाम् धेनुवत्से च यत्नविशेषः।

## शिक्षा

बाल्ये एवायं ग्राम्यवङ्गविद्यालये पठितुं प्रवृत्तः 'आपार प्राइमारी' पर्य्यन्तं तत्रैवाधीतवान्, परन्तु स्थानान्तरं गत्वा परीक्षा प्रदातव्येति गुरुजनानुमत्यभावात् परीक्षातो विरतोऽभवत्।

## आङ्गलविद्याशिक्षा

यदा त्वसौ वङ्गभाषायां प्राथमिकं ज्ञानं सम्पूर्णतया लब्धवान्, तदा त्वमुष्मिन् आङ्गलविद्यापारदर्शिनि सति अर्थसौकर्य्यं स्यादिति मत्वा प्राचीनं पुरुषपरम्परागतं संस्कृतज्ञानञ्च यथा अप्रतिहतं स्यात् तदर्थं कलकत्ता 'संस्कृतकलेजा'ख्ये विद्यालये एवायम् अध्यापयितव्य इत्यसौ सपरिजनमानीतः कलकत्तायाम्, प्रवेशितश्चाभवत् तस्मिन् विद्यालयेऽष्टमश्रेण्याम्। तदा तु सर्वे एव 'हातिबागाना'ख्ये कलिकातानगर्य्याः पल्लीविशेषे भाटकगृहे एवातिष्ठन्।

क्रमश एव तस्य ज्ञानलाभाभिनिवेशोऽध्यवसायश्च शिक्षकाणामभवत् परमसमाकर्षणस्थानम्, प्रमोदविषयश्च गुरुजनानाम्। तत्रैव विद्यालयेऽसौ बि. ए. परीक्षापर्य्यन्तमधीतवान्, परन्तु विस्मयजनकमेतद् यदसौ कदाप्यमुष्मिन् विद्यालये परीक्षासु द्वितीयं स्थानमधिकृतवानिति न श्रूयते। विश्वविद्यालयपरीक्षास्वप्यसौ सर्व्वत्रैव वृत्तिपदकोपायनादिकं लब्धवान्।

एन्ट्रान्सपरीक्षायाम्, एफ्. ए. परीक्षायाञ्चासौ वृत्तिं लब्धवान्, बि. ए. परीक्षायां तु 'अनार्स'-विभागे प्रथमश्रेण्यां द्वितीयं स्थानमधिकृत्य 'जुबिलो पोष्ट् ग्राजुयेट्' वृत्तिम्, प्रसन्नकुमारसर्व्वाधिकारि-स्वर्णपदक-

ष्वालभत ; तदेव 'इउरोप'गमनार्थं गवर्णमेण्टसकाशात् 'ष्टेट् स्कलारशिपाख्य'वृत्तिप्रदानस्वीकृतिं लब्ध्वाऽपि तां प्रत्याख्यातवान् ।

१९१० खीष्टाब्दे एम्. ए. परीक्षासमये 'रेमिटेण्ट्'-ज्वरक्लेशमनुभवन् कथं कथमपि उत्तरपत्राणि लिखितवान्, तदापि वेदविभागे द्वितीयं स्थानमधिकृतवान् । पुनश्चासौ १९११ खीष्टाब्दे स्मृतिमीमांसयोर्विभागे एम्. ए. परीक्षां दत्तवान् तदा तु स्वविभागे संस्कृतान्तर्गतेषु सर्वेषु विभागेषु च प्रथमं स्थानमधिकृतवान्, प्राप्तवांश्च 'हेमचन्द्रगोस्वामि'-स्वर्णपदकोपायने, 'पोष्टग्राजुयेट्'-स्वर्णपदकोपायने 'सोणामणि'-पुरस्कारञ्च । तदापि 'गवर्णमेण्ट'सकाशात् 'इउरोप'गमनार्थं 'ष्टेट् स्कलारशिपा'ख्यवृत्तिप्रदानस्वीकृतिं लब्ध्वा पूर्ववदेव प्रत्याख्यातवान् ।

तस्मिन्नेव वर्षे गवर्णमेण्टसकाशात् संस्कृतकलेजाख्यविद्यालये निम्नश्रेणीत एम्. ए. परीक्षापर्य्यन्तमधीतवानसाविति शास्त्र्युपाधिभागभवत् । १९१४ खीष्टाब्दे बि. एल्. परीक्षामुत्तीर्णोऽभवत्, १९२३ खीष्टाब्दे च पि-एइच्. डि. इत्युपाधिं लब्धवान् । भारतधर्म्ममहामण्डलादसौ विद्यासुधाकर इत्युपाधिना भूषितोऽभवत् ।

## विविधभाषाज्ञानम्

अनधिकवयसोऽप्यस्य विविधभाषाज्ञानं सर्व्वेषामेव विस्मयस्थानमभवत् ; न केवलं वङ्गाङ्गलसंस्कृतभाषासु परन्तु फ्रेञ्च-जर्म्मन-ल्याटिन्-ग्रीक्-जापान्योलन्दाजप्रभृतिष्वपि भाषास्वसौ नितरां व्युत्पन्न आसीत् ।

## कर्म्मजीवनम्

१९१२ खीष्टाब्दतः १९१४ खीष्टाब्दं यावदसौ वङ्गवासीकलेजाख्ये महाविद्यालये संस्कृताध्यापनकर्म्मव्यापृतश्छात्रसंसदि लब्धकीर्त्तिरध्यक्षाणां प्रीतिविशेषं लब्धवान् । ततश्च १९१४ खीष्टाब्देऽसौ उच्चधर्म्मा-

धिकरणे व्यवहाराजीवरूपेण प्रविष्टोऽभवत्, परन्तु १९१७ खीष्टाब्दे कलकत्ताविश्वविद्यालये 'पोष्टग्राजुयेट्'-विभागसूचनानन्तरमेव सार् आशुतोषमुखोपाध्यायमहोदयेनासौ संस्कृतविभागे अध्यापकरूपेण नियुक्तोऽभवत्, ततः प्रभृति शिक्षाविषये एवासीदस्य भूयानाग्रहः ; व्यवहाराजीवत्वं तु परित्यक्तमेवासीदनेन। अचिरप्रस्ताविते-"सार् आशुतोषसंस्कृताध्यापक"पदेऽप्ययं नियोगार्ह इति चासीत् मतिरनेकेषाम्।

बहुषु परीक्षास्वसौ परीक्षक आसीदिति तु विदितचरमेव। कलकत्ताविश्वविद्यालयेऽसौ म्याट्रिकुलेशन, इण्टारमिडियेट्, बि. ए. एम्. ए. परीक्षासु च बहुकालं यावत् उत्तरपत्रपरीक्षकत्वेन प्रश्नकर्तृत्वेन च 'कलकत्ता-संस्कृत-एसोसियेशन' इत्याख्यायां समितौ तथा विहारोड़िष्यासंस्कृतपरीक्षासमितौ, सारस्वतसमाजे, ढाका-विश्वविद्यालये, पाटना-विश्वविद्यालये चासौ बहुशः उत्तरपत्रपरीक्षकत्वेन प्रश्नकर्तृत्वेन च नियुक्तोऽभवत्। अस्मिन्नेव वर्षेऽसौ कलकत्ताविश्वविद्यालयस्य प्रवेशिकापरीक्षायां संस्कृतभाषायाः पत्रविशेषे प्रधानपरीक्षको न्ययोजि।

## समितिपरिचालनं कर्मोत्साहश्च

१९२१ खीष्टाब्दत एवासौ निखिलभारतीयसंस्कृतसाहित्यमहासम्मेलनस्यान्यतमः सहसभापतिरभवत्, दशवर्षं यावदेव संस्कृतसाहित्यपरिषदोऽन्यतरसम्पादकरूपेण, 'जेण्ट्स् इउनाइटेड् क्लाब्' इत्याख्याया व्यायामसमितेः सभापतिरूपेण, इतरेषु बहुषु शिक्षाप्रतिष्ठानेषु चान्यतम-परिचालकरूपेणासौ देशस्य महान्तमेवोपकारं साधितवान्। या ह्येयं संस्कृतसाहित्यपरिषदधुना संस्कृतभाषोज्जीवनाय आर्यशिक्षाप्रचाराय च विराजमाना न केवलं भारतवर्षीयाणां वैदेशिकानामपि नेत्राण्याकर्षति, स एवाभवदेतदुन्नति-

विशेषनिदानन्तस्याः, किं बहुना ; स भवान् प्राणस्वरूप एवासीदस्याः परिषदः।

'ओरियेण्टाल् कन्फारेन्स्' इत्याख्यायाः समितेः पञ्चमाधिवेशनं लाहोरप्रदेशे भविष्यतीति निर्द्धारितं, कलकत्ता-विश्वविद्यालयस्य ये हि नाम अध्यापकाः प्रतिनिधिरूपेण तत्र गमिष्यन्ति, स खलु तेषामन्यतम आसीत्, परन्तु न ह्यमुना सोऽवसरः प्राप्तः, पूर्वमेवासौ परलोकं गतवान्।

## तेन सम्पादितानां रचितानाञ्च ग्रन्थानां नामानि

१। सायणभाष्यसंग्रहः ( म्याक्डोनेल्-महोदयानां वैदिकसूक्तसंग्रहानुरूपः )।

२। पूर्वमीमांसोपोद्घातः ( Introduction to Pūrva Mīmāṁsā. )

३। जार्म्मान रीडार् [ द्वितीयो भागः ] ( German Reader, Part II )

४। फ्रेञ्च रीडार् [ प्रथमो भागः ] ( French Reader, Part I )

५। ऋग्वेद-भाष्योपोद्घातः ( सटीकः, भूमिकया चालङ्कृतः )।

६। ऋक्-प्रातिशाख्यम् (उवटानुसारिण्या स्वकृतया व्याख्यया भूमिकया चालङ्कृतम् )।

ऐषमस्तु (१) उद्घाहतत्त्वस्य सम्पादनविधौ यतमानोऽभवत्। (२) उच्चभारतीयजीवन-(Alt-Indisches Leben—by Zimmer) नामधेयस्य ग्रन्थस्यानुवादकर्म्मणि व्यापृतः चतुर्थाध्यायपर्य्यन्तं समाप्तवान्, (३) वङ्गाङ्गलजार्म्मानभाषासमन्वित-शब्दकोषसम्पादनविधौ श्रमविशेषमाश्रितस्तथा, (४) मीमांसाशास्त्रमवलम्ब्य संस्कृतभाषया ग्रन्थविशेषरचने प्रयतमानश्चासौ २०० द्विशतपृष्ठपरिमितं समाप्तवान्।

**अध्यापकाः**—ब्रह्मश्री-सत्यव्रतसामश्रमी, म-म-श्रीहरप्रसाद-शास्त्री, म-म-श्रीलक्ष्मणशास्त्री, म-म-श्रीप्रमथनाथतर्कभूषणः, म-म-श्रीआशुतोषशास्त्री, पण्डित-श्रीवनमाली वेदान्ततीर्थः, डाः-श्रीआदित्य-नाथसुखोपाध्यायः, मि, एइच्, एम्, पार्सिभ्याल, रायबाहादुर-श्रीहेम-चन्द्रदे-प्रभृतयश्च।

**सहकर्मिणः**—(विश्वविद्यालये) म-म-श्रीअनन्तकृष्णशास्त्री, म-म-श्रीकृष्णचरणतर्कालङ्कारः, म-म-श्रीगुरुचरणतर्कदर्शनतीर्थः, पण्डित-श्रीकोकिलेश्वरशास्त्री, डाः आइ, जि, एस्, तारापुरश्रोयाला, डाः-श्रीसुनीतिकुमारचट्टोपाध्यायः, डाः-श्रीनिरञ्जनप्रसादचक्रवर्त्ती, डाः डि, आर्, भाण्डारकारः डाः वि, एम्, वड़ुया-प्रभृतयश्च।

**सहाध्यायिनः**—पण्डित-श्रीसुरेन्द्रनाथमजुमदार-शास्त्री, पण्डित-श्रीलक्ष्मीनारायणचट्टोपाध्यायो वेदशास्त्री ( गौहाटी ), डाः-श्रीतुलसीचरणभट्टाचार्यः, डाः-श्रीवनविहारीमुखोपाध्याय-प्रभृतयश्च।

**विशिष्टाश्छात्राः**—श्रीदिनेशचन्द्रचट्टोपाध्यायः (एलाहाबाद-विश्वविद्यालये अध्यापकः), श्रीक्षितीशचन्द्रचट्टोपाध्यायः ( कलकत्ता-विश्वविद्यालये ), श्रीदक्षिणारञ्जनशास्त्री ( संस्कृतमहाविद्यालये ), श्रीदुर्गामोहनकाव्य-सांख्य-पुराणतीर्थः ( नरसिंहमहाविद्यालये ), श्रीचिन्ताहरणचक्रवर्त्ती ( वेथुन-महाविद्यालये ), श्रीनरेन्द्रनाथ-चतुर्धुरीणः ( दिल्लीस्थे रामजास् महाविद्यालये )।

**मृत्युः**—१३३४ वङ्गाब्दीये माघस्य एकविंशदिवसे ( १९२८ खृष्टाब्दीये फेब्रुयारीमासस्य चतुर्थदिवसे ) यथारीति दैनिककृत्यावसाने रात्रौ सार्द्धदशमहोरायां सन्न्यासरोगाक्रान्तः सन् तस्या एव रात्रेरव-साने माघपूर्णिमायां तिथौ पञ्चत्वमाप्तवान्।

उपहृतं वाचकमहोदयेभ्यः शास्त्रिणां जीवनचरितम्। समाप्तौ च मृतमहात्मनां तृप्तिविशेषमुद्दिश्य प्रस्तुमः—

"यत्रानन्दाश्च मोदाश्च यत्र पुण्याश्च सम्पदः।
वैराजा नाम ते लोकास्तैजसाः सन्तु ते ध्रुवाः॥"

---

# पशुपतिनाथस्मृतिः

[ निबन्धकः—महामहोपाध्यायः श्रीपद्मनाथविद्याविनोदः ]

नत्वा पशुपतिं देवं स्मृत्वा पशुपतेर्गुणान्।
इयं पशुपतेः पुण्याः प्रेष्यते लिपिका मया॥

तत्रभवान् डाः-पशुपतिनाथशास्त्रिभट्टाचार्य्यः संस्कृतकलेजभूषण-भूतः कोऽपि छात्र आसीदिति मे श्रुतिगोचरमभवत् प्रायेण विंशतेः संवत्सरेभ्यः प्रागेव। परन्तु यदा तस्य सहाध्यायी श्रीमल्लक्ष्मीनारायण-चट्टोपाध्यायो वेदवेदान्तशास्त्री अस्मत्सहयोगिरूपेण प्राग्ज्योतिषस्य-राजकीयविद्यालये ( कटन् कलेज इति समाख्याते ) अध्यापको नियुक्तः अभवत् तदैव तन्मुखतः पशुपतिनाथस्याशेषोत्कर्षविषयिणी कथा प्रसङ्गत आकर्णिता बहुशः।

अथैकदा श्रीमता लक्ष्मीनारायणेनैव सार्द्धं तत्समवयस्कः कश्चि-दसेचनकस्तरुणो मम्मैवावासवाटिकायां सहसा समुपस्थितोऽभवत्। अयमेव श्रीपशुपतिनाथशास्त्रीति विज्ञापितः सुतरां सञ्जनितहर्षः सादरमुक्तवानासम्—'अहो नूनमयं मे सुदिवसो यद्भवता बहुश्रुतेन सहाद्य साक्षात्कारः सञ्जात' इति।

यस्मिन् खलु—"आकारसदृशप्रज्ञः प्रज्ञया सदृशागम" इति कालिदासोक्तिः सुप्रयोज्यासीत्, तेन सार्द्धं कथोपकथनेन घटिकामितः क्षपितः समयः सातिशयानन्दसन्दोहेन। ततः प्रभृति संस्कृतसाहित्य-परिषदः सदस्यो भूत्वा समासाद्य च यथानियमं संस्कृतसाहित्यपरिषत्-पत्रं प्रतिमासं तस्याः सम्पादकेन शास्त्रिणा पशुपतिनाथेन सहैव

ज्ञातसम्बन्धस्तस्य संस्कृतभाषायामसाधारणलिपिकुशलताञ्चावेक्ष्य तद्गुणाकृष्टो मुग्धश्च नितरां तत्पक्षपाती समभवम्।

कलिकातायाञ्च यदाहं पञ्चषान् दिवसान् सतीर्थस्य मे महामहोपाध्याय-श्रीयुक्ताशुतोषशास्त्रिभट्टाचार्य्यस्यालये अवातिष्ठे, तदा पशुपतिनाथेन सह पुनः साक्षात्कारोऽभवत्, तदनुरोधात् श्रीयुक्ताशुतोषेण सार्द्धं संस्कृतसाहित्यपरिषद्भवनं गत्वा तस्य कीर्त्तिमन्दिरं तदपश्यम्। प्राणपातैरेव यस्याः प्रतिष्ठाऽनेन कृता, यदुन्नत्यै भृशमनिशमस्य प्रयत्न आसीत्, यन्नाम्नास्य नाम ग्रथितमिवाभवत्, न जाने तस्याः परिषदः कावस्था सम्प्रत्यस्य तेऽस्यातर्कितिरोधानेन। "नेहाभिक्रमनाशोऽस्तो"ति श्रीमद्भगवद्वाक्यमेवात्रावलम्बनं चित्तप्रबोधनाय। प्रार्थये च सर्वैरेवावाह्यान्तःकरणैः श्रीविश्वेश्वरसमीपे द्वादशवर्षदेशीया बालेयं परिषत् पोषयितुर्वियोगेऽपि क्रमोन्नतिपदवीमिव शनैः समारोहतादिति।

विशुद्ध-ब्राह्मणवंशावतंसोऽसौ स्वधर्म्मानुरागी स्वकीयसमाजहितैषी च सुतरामासीत्। अत एव यथा कलिकलुषितायां कलिकातायामागत्य ब्राह्मणवंशीया विद्यार्थिनोऽनभिमतं पन्थानं कमपि न भजेरन् तदर्थमासीदस्य पशुपतिनाथस्य महान् प्रयासः। "ब्राह्मणवोर्डिं" इति समाख्यातः कश्चिच्छात्रावासोऽप्यनेन (वङ्गीयब्राह्मणसभाद्वारा) संस्थापितोऽभवत्। परन्तु दुर्भाग्यवशात् स खलु छात्रावासः संवत्सरकालमपि स्थातुं नाशकत्। आसीदस्य मया सह अत्रैव विषये संलापः,—अवागच्छञ्च, विघ्नैरित्यप्रतिहन्यमानोऽपि नासीदसौ अस्मिन्नपि व्यापारे नितरां निराश इति। मन्ये यद्यकालमृत्युरेनं नाहरिष्यत्, न चिरेणैव तदा पुनः ब्राह्मणच्छात्रावाससंस्थापनायाप्यस्योद्यमः समभविष्यत्। हा हन्त अनेनैव सह गता मे एतद्विषयिणी आशा चिराय।

अथ वरपुत्त्रस्येवास्य शास्त्रिणः पशुपतिनाथस्य अचिरवियोग-

विधुरेव भगवती गीर्वाणवाणी सम्यगुपयाचितापि प्रसादं न भजते,—नापि स्वच्छन्दं प्रसरति ;—अतः संस्कृतसाहित्यपरिषत्पत्रिका-सम्पादकमहोदयस्यानुरोधप्रतिपालनार्थं विद्वद्वर्य्यस्य तत्रभवतः शास्त्रिणः स्मृतिं प्रति सम्मानप्रदर्शनाय च कथं कथमपि कतिचित् पंक्तयो निबद्धाः ।

यदैवास्याकालस्वर्गतिमश्रौषम्, तदा मे मनसि समुदितो भावः श्लोकेनानेन संक्षिप्य वर्ण्यते ;—

यस्यैव शास्त्रिमहतः सुबहुप्रयत्नै-
र्गीर्व्वाणवाक्परिषदो विहिता प्रतिष्ठा ।
सोऽयं युवापि परिहाय वयः-प्रवृद्धान्
हाहा गतः पशुपतिः क्व नु सौम्यमूर्त्तिः ॥

---

## पशुपतिशास्त्रिणामकालपरलोकगमने शोकोच्छ्वासः

[ निबन्धकः—महामहोपाध्यायः श्रीफणिभूषणतर्कवागीशः ]

प्रियतम !

चिरेणासीर्मनश्चारी चारित्रेण सुचारुणा ।
विद्योतसे स्म नितरां विद्यया चानवद्यया ॥ १
धर्म्मानपेतकर्म्माणि धर्म्मिणां मर्म्मवेदिना ।
निर्म्मत्सरेण भवता निर्म्मितानि सहस्रशः ॥ २
शंसितुं सुरभारत्या महिमानं महीतले ।
सत्यमेव त्वया साधो कृतं प्राणविसर्जनम् ॥ ३
जगतां कोऽपि कुर्वीत तुच्छमण्वपि कर्म्म चेत् ।
भूरिभेरीनिनादेन तद्वार्त्तां घोषयत्यलम् ॥ ४
सर्व्वैषणाविनिर्मुक्तो गर्व्वगन्धमनुद्वहन् ।
तूष्णीम्भावेन भवता महत् कार्य्यमनुष्ठितम् ॥ ५

त्वं पूर्व्वोत्तरमोमांसाशास्त्रयोर्गूढ़सङ्गतिम् ।
अपूर्व्वां प्रकटोकुर्व्वन्नव्यां कोर्त्तिमवाप्तवान् ॥ ६
नानाविधासु भाषासु पाण्डित्यं भवतः स्थितम् ।
धिया श्रिया च भवता स्पर्द्धमानो न दृश्यते ॥ ७
रूपविद्यायशः-सम्पद्-योगैरपि चिराय ते ।
नम्रता रमणोयासीत् तरोरिव फलोद्गमैः ॥ ८
भवद्वियोगविपदामाकस्मिकनिपातनैः ।
भृशं दौर्व्बल्यमापन्नाः सर्व्वे ब्राह्मणपण्डिताः ॥ ९
मातृवत्सलपुत्रस्य त्वादृशस्य वियोगतः ।
शोचनोयां दशां याता देवो सुरसरस्वती ॥ १०
प्रायः प्रतिष्ठासमयादनुरागपुरःसरम् ।
गृह्णन् संस्कृतसाहित्यपरिषन्मन्त्रिणः पदम् ॥ ११
अद्य तामोदृशीं भूमीमुन्नतेर्नोतवानसि ।
ययेयं भारते वर्षे सर्व्वोत्कर्षेण वर्त्तते ॥ १२
कस्मै समर्प्य परिषत्कार्य्यभारं दृढ़व्रत ।
अकाण्ड एव सहसा लोकान्तरमुपागतः ॥ १३

---

## पशुपतिशास्त्रिण्यस्तमिते शोकच्छाया

[ निबन्धकः—श्रीकानाइलालपञ्चतोर्थः ]

अकालमृत्यो ! भवता जितं जितं
यन्नेत्ररत्नं विदुषां हृताहृतम् ।
रत्नानि दैन्यं पितृधामवज्जलं
हन्तुं न ते रत्ननिधिः कदाप्यलम् ॥ १

धन्या धरण्यार्थ्यशतैः कृता त्वया
वेश्येव वश्याद्य गतान्यविक्रया ।
यस्यां युवोर्ज्जस्विशवैर्गृहे गृहे
साचात् कुरुचेत्ररणस्य कुर्म्महे ॥ २

त एव नाकीकृतभूमिकागुणाः
प्रभाश्च तास्तत्प्रतिभासहासनाः ।
हृतास्त्वया कुत्र बलादुत च्छलात्
तिरोगता वास्मदट्टष्टदुष्फलात् ॥ ३

कं स त्वयानीयत कर्म्मसङ्गो
यच्छर्म्मणानर्च्यत मर्त्त्यसङ्घः ।
प्रेम्णा यतोऽङ्केन शशाङ्कवेशा
नाम्ना नृणां भारतभूः सभूषा ॥ ४

अचेतनाप्यद्रितटीव निर्झरं
पर्णाञ्जलौ प्राज्यरसं फलोत्करम् ।
आदाय नो यच्छति पूर्व्ववद्रसा
नाकालमृत्योरधुना ससाध्वसा ॥ ५

वल्लरः प्रफुल्लाः सफलाश्च वृक्षा
नार्य्यः सगर्भा शिशवः सुशिक्षाः ।
काले सतोन्दुं गिलतीह राहु-
र्न कोऽप्यकालं सफलं तदाहुः ॥ ६

देहाभिमानोऽस्तमुपैति विद्यया
सुनीतिरेषा यदवाप्तसत्क्रिया ।
तानात्मबोधादतिमृत्युनोन्नता-
नकालहानिः कथमित्यसङ्गता ॥ ७

कालः क्रियेत्याप्तजनोक्तवाग्यतो
मृत्योरकालोऽस्तु कुतः क्रियावतः ।

पश्येन्दुरत्येति खवर्त्म यावता
निद्रालसैः सा क्षणदा क्षणीकृता ॥ ८

न सन्त्वभाग्याः स्वजनाः सुयोग्याः
श्लाघ्या वयं यत्क्रिययाप्यलघ्व्या ।
आविस्तिरोभावमया मनुष्याः
परन्तु भूस्तद्गुणराशि-वश्या ॥ ९

इति पशुपतिशास्त्रिण्यङ्करेष्वार्थ्यजातैः
सुलभमतिषु वङ्गेष्वत्तमेऽन्तं प्रयाते ।
तदुपकृतिनिराशो रामकानाइ नामा
तमनु समनुतापं वक्ति युक्तं द्विजन्मा ॥ १०

---

## पशुपतिस्मृतिः

[ निबन्धकः—श्रीविधुशेखरशास्त्री ]

यच्छ्रुतं यच्च दृष्टं ते तेन चित्तं हृतं त्वया ।
हन्त स त्वमदृश्योऽपि स्मरणीयोऽसि सर्वदा ॥

---

## स्वर्गतः पशुपतिनाथः

[ निबन्धकः—कविराज-श्रीताराचरणचक्रवर्त्तिदर्शनतीर्थः ]

हा हन्त ! गरीयान् खलु कालप्रभावो येनाब्रह्मस्तम्बपर्य्यन्तं जगदिदं विपरिणमते । एतेनैव नियमेन संस्कृतसाहित्यपरिषत्प्राणभूतः पशुपतिनाथोऽपि स्वपुण्यार्जितं धाम प्रस्थितः । महाप्रयाणमिदं प्रयातस्य परिजनान् परितापयति प्रत्याकुलयति चेति लोकपरम्परागतोऽनुभवः । निष्प्रीत्यपतापदर्शिनस्तु परीक्षकाः महाप्रयाणमवस्थान्तरं

नाम प्रविवेचयन्तः शोकमत्र परित्यजन्ति । श्रीविभूतिमदूर्जितसत्त्वानां महापुरुषाणामेतादृशं संसरणमापाततोऽमङ्गलमपि न कथंचन परिणाममङ्गलं व्याहन्येत ।

जननमरणे नामान्वयव्यतिरेक-सद्भावे प्रवरावरे ते तद्विधसंस्कारसचिवे कारणानुरूपफलविशेषमारभमाणे भवतः, तदिदमाम्नायते "रमणीयाचरणास्तु रमणीयां योनिमापद्यन्ते, कुपूयाचरणास्तु कुपूयां योनिम्" इति, स्मर्य्यते च—

"यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः" ॥ इति

तथा च महाजनः स्वं स्वं प्रारब्धं कर्म्म सफलीकरिष्यन वर्त्तमानशरीरं विहाय नवानि सकलप्रतिबन्धकसहानि स्वजातीयोत्कृष्टानि जन्मान्तराणि परिगृह्णाति, पशुपतिनाथोऽपि शाश्वतीमिमामेव पदवीमवलम्बितवानित्यस्माकं महत्यास्था, विश्वेश्वरमहेश्वराराधनबलान्नन्दीश्वरस्य जात्यादयो विशिष्टा भावाः; तपःप्रभावाद्विश्वामित्रादीनां जात्यायुषी च सविशेषमिदं प्रमाणीकुर्व्वन्ति । पशुपतिनाथोऽप्यभिनवकलेवरः परिगृहीतविद्वद्वपुः पुनरुज्जीवयिष्यति संस्कृतभारतीमिति तद्वियोगविधुरा वयं कथमपि हन्त ! जीवामः ।

अचिरादितः प्राक् पशुपतिनाथाभ्युदयादमरसरस्वती शुक्लपक्षादौ चन्द्ररेखेव; धूमजालपिनद्धा विभावसोः शिखेव; अङ्गारकपीड़िता रोहिणीव मन्दप्रख्यायमानेन स्वरूपेणोपलभ्यमाना केषां नाम सहृदयानां चेतो न व्यथयति स्म, परं पशुपतिनाथसनाथा सुरभारती अर्द्धसञ्जातशस्या वसुन्धरा वृष्टिं प्राप्येव कथमपि रुचिरामाभां बिभ्रत्यपि पुनस्तदनाथा वात्याहता पङ्कप्रदिग्धा नलिनीव नाम सुतरां विभाति न विभाति च । साम्प्रतं तपस्विन्याः संस्कृतभाषायाः समुपस्थितः पुरतो महान् समुपप्लवः । यत्र संस्कृतानुशीलनरताः पूर्वाचार्य्या अवसीदन्ति; शिष्याः सद्गुरुसान्निध्यं न लभन्ते; तत्सहायकाश्च

वसुमित्रा लास्यलीलाविकीर्णवसवः संक्षिपन्ति ब्रह्मवर्द्धनानि वसुदानानि ; असन्तुष्टाः सन्ततयः ; दैन्यनिपीड़िता लोकयात्रा ; इत्येवमादयो बहवः प्रतिकूला भावा ह्रासयन्ति प्रतिनियतं संस्कृतभाषाम् । अयं चाग्रतः छिद्रेष्वनर्थ इव ; लोकोपप्लवाय धूमकेतुरिव समुत्थितो विश्वविद्यालयाधिपानामप्रतिवारप्रभावः प्रज्ञापराधः, येन भीमाभिराव्याधिनीभिरिवाक्रान्ता विश्वपण्डिता बहिष्कुर्वन्ति विश्वविद्यालयेभ्यः संस्कृतभाषाम्, यामेताम् अर्णवसन्नां नावमिव ; सन्नां महाकीर्त्तिमिव ; विमानितां श्रद्धामिव ; परिक्षीणां प्रज्ञामिव ; प्रतिहतामाशामिव ; तमोग्रस्तेन्दुमण्डलां पौर्णमासीं निशामिव ; भूतप्रेतपरामृष्टां वेदीमिव परामृश्यन्तः प्रतिकाराक्षमा विबुधब्रह्मपरा हृतवीर्य्या विषधरा इव त्रातारमपेक्षन्ते । एतादृशे दैवदुर्दिने पशुपतिनाथस्य महाप्रयाणेन प्रलयपयोधिपर्य्याकुला श्रुतिरिव देववाणी विपर्य्यस्ता, एतत्पराभवप्रतिकाराय पशुपतिनाथगुणाः पुरुषधौरेयाः प्रभवन्ति । यैः व्यस्ताः समस्ताश्च वक्ष्यमाणाः महानुभावस्य तस्य गुणविशेषाः अनुकरणीयाः भवेयुः । त एते तत्रभवतो गुणा अस्माभिः भूयोभूयो लक्षिताः प्रदर्श्यन्ते, तद्यथा असाधारणं धैर्य्यम् ; महोत्साहः ; विपुलोऽध्यवसायः ; काले हितमितमधुरार्थवक्तृत्वम् ; पृथिवीसमा क्षमा ; परपरुषवचनसहिष्णुता ; राजद्वारे प्रभविष्णुता ; विश्वासभाजनता राजपुरुषाणाम् ; विज्ञापकत्वं श्रेयस्कराणां भावानाम् ; चातुर्वर्ण्यस्य रक्षकत्वम् ; साधूनामुपकारज्ञत्वम् ; प्रचारज्ञत्वं कर्म्मणाम् ; ब्राह्मणानामुपासकत्वम् ; सर्वलोकप्रियंवदत्वम् ; ज्ञानवत्ता ; शीलसम्पन्नता ; मित्रलाभसामर्थ्यम् ; मित्रैश्चाभिगम्यत्वम् ; कल्याणमित्रत्वम् ; देवानुग्रहाणामाशास्तृत्वम् ; युगपद्दैवपुरुषकारसेवित्वम् ; सुखानामुचितत्वम् ; असुखानामनौचित्यम् ; सरलत्वं चेति, यद्यप्येते गुणा विरला नाम मानवशरीरे निविशन्ते तथाप्यनादिभावप्रवाहपरम्परया सनातनसिद्धान्तरक्षणपरेषु केषु च पशुपतिनाथविधेषु

युगे युगे सम्प्रदायप्रवर्त्तनार्थं समाविशन्ति यदाशास्ति भगवान् कृष्ण-द्वैपायनः—

"यदा यदा हि धर्म्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्म्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्म्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ इति

---

## पशुपतिसमाधिः

[ निबन्धकः—श्रीगिरिजाप्रसन्नव्याकरणतीर्थः ]

हा हन्त ! हन्त ! किमिदं गुरुदुःखजालं
निर्घातनिस्वनमहाकलघोरशब्दः ।
अस्तं गतो दिनमणिर्जगदन्धितं नु
विश्वं दिनेऽपि पिहितं प्रलयान्धकारैः ॥ १ ॥

हे भूमिदेव ! मम देव ! गुरो ! सुहृन् मे
हे शान्तमानस ! सदा शुभकार्य्यकारिन् !
हे नित्य सर्व पशुपाशविनाशकामिन्
हे भारतीचरणपङ्कजरेणुधन्य ॥ २ ॥

इयं सुरतरङ्गिणी ललितवीचिहासान्विता
सपुण्य"परिष"च्चिरं पशुपतेश्च मौलौ स्थिता ।
धियाऽमृतजधारया पतितपावनी पावनी
धरातलललामकं शरणमेतु याचामहे ॥५॥

वाणीमञ्जुलमन्दिरं विरचितं श्रीकालिकाचेत्रके
वाणीसेवकरञ्जनं कृतमहो प्राणप्रयाणोत्सवे ।
वाणी ते परमा धिया सुविमलां कुर्य्यादिमां शाश्वतीं
श्रद्धाभिः परितर्पये पशुपते त्वां स्वर्गतं मे गुरुम् ॥६॥



प्राःदक्षिणप्रनादावुपविष्टो यविष्ठः पशुपतिनाथः । वामदक्षिणयोरङ्गीकृताभ्यां तत्सुताभ्यां तत्पिता ।

वामे भ्रातृपुत्रः ।

# शोकविलसितम्

[ निबन्धकः—श्रीशरत्कमलन्यायस्मृतितीर्थः ]

प्राच्यपाश्चात्त्यविद्यासु निष्णातोऽप्यविकत्थनः ।
अजातशत्रुः सर्वत्र सदैव सौम्यदर्शनः ॥ १
सदानन्दः सदालापः सदाहास्यास्यशोभनः ।
सत्कर्मसु सदोद्युक्तः सदा सद्धर्मसेवकः ॥ २
भूदेववंशसम्भूतो भूदेवगुणमण्डितः ।
भूदेवगुणवद्विद्वद्भूदेवप्रतिपालकः ॥ ३
गीर्व्वाणवाणीपरिषन्नेतासौ "शास्त्रि"भूषणः ।
गतः "पशुपतिनाथः" शैवं तत् स्वनिवेशनम् ॥ ४

सर्व्वाणि शास्त्राणि विकाशयन्ती
शैलूषवृन्दैर्विविधञ्च नाट्यम् ।
विभाति यासौ परिषच्च पत्रिका
स तत्र मूलं बलजीवने च ॥ ५

तेनैव हीना परिषत् सदाऽद्य
पुत्रेण हीना जननीव रौति ।
वयं हि तच्छोकतरङ्गघाता-
ज्जाता जले नौरिव मूढ़वाता ॥ ६

प्रारिप्सितं कर्म्म सदा तदीयं
तदीयमार्गाननुसंसरद्भिः ।
सम्पादनीयं यदि तस्य भक्तै-
स्तदैव तुष्टो भविता तदात्मा ॥ ७

पशुपतिपदमाप्त ब्रह्मरूपेण राजन् !
अयि "पशुपतिनाथ" ! प्राञ्जलि त्वां प्रयाचे ।
तव गुणगणमुग्धान् शोकदग्धानिदानीं
कुरु महिमभिरार्द्रान् प्रेमभिश्च त्वदीयैः ॥ ८

---

## पशुपतिनाथप्रयाणम्

[ निबन्धकः—श्रीउपेन्द्रनाथकाव्यतीर्थः सेनगुप्तः ]

"नियतिर्विधाय पुंसां प्रथमं सुखमुपरि दारुणं दुःखम् ।
कृत्वालोकं तरला तड़िदिव वज्रं निपातयति ॥" वाणः ।

भाषा खिद्यते, पाणिर्वेपते, दृष्टिर्जड़ायते—यदद्य शास्त्रिपादानामपि महाप्रयाणमधिकृत्य किञ्चिल्लेखनीयम् । अदृष्टमेवाड़म्बरं नोलाम्बरं निर्भिद्याकालिकाशनिरुत्पात इव "पण्डितप्रकाण्डः असेचनकमूर्त्तिः पशुपतिनाथः कीर्त्तिशेषतां गतः" इत्युदन्तः संदेशपत्रैर्यदा सहसा समुपनीतस्तदा मासपीड़ितस्यापि व्याधिराधिना पराभूत इव समभवत् । असकृत् संदेशं समवलोकितः, यद्व्याधितत्वाद् दुर्बला दृष्टिरेव प्रतारयति उत यद् दृष्टं तत् सत्यमेव ; ततः प्रतीतिभूमिं समुपगते चेतसि दीर्घं निःश्वस्य—अथवेदृशी खलु संसारगतिः, स्थितिश्चेयं हतभागधेयानामस्मादृशां नियत्याः, यत्तथाविधाः पुण्यचरिताः कतिनश्च न चिराय बन्धुत्वेनास्माननुगृह्याखिलक्लेशनिवहेन खिलीकृतमङ्गले भूमण्डले तिष्ठन्तीति कथमपि मानसमुपसान्त्वयन्तोऽतिष्ठाम । शान्ता नाम वयं ये तावदशक्त्या न सम्यक् रसज्ञास्तन्मनीषितायाः, स्वल्पत्वादभावज्ञाश्च तदीयचरितौदार्यस्य—परं कथं नाम क्षमन्तां बुधाः आकालिकीमस्य विबुधावासवसतिं, कथं वास्य प्रणयित्वाभिमानिनो बद्धसौहृदाः सुजनाः सहसान्तर्द्धानं, कथं

वा आजन्मनः समाश्रिता सहतां परिषदस्य चिरविरहं, केनोपायेन वाऽलङ्घितकौमाराः कुमारा वहन्तु पितुरदर्शनक्लेशं, कथं वास्य सप्तति-वर्षदेशीया जननी देवी दहनदाहनादप्यतिरिच्यमानं शमयतु प्रिय-सुतस्य शोकसन्तापम्।

अथवा कालः कलयिता भूतानाम्, अकाल इति शब्दमात्रेण भ्रान्तचेतसां चेतसि विराजते, न विद्यतेऽस्य स्वरूपतः काप्यवस्थिति-रिति पण्डिताः समामनन्ति। क्षीणपुण्या बहव एव स्वर्लोकवासिनो हतभागधेयस्यास्य वङ्गविषयस्यातिथ्यं स्वीकृत्य स्वीकृत्याक्षयस्वर्गमुपार्ज्य स्वस्थानं प्रस्थिताः कृतिशेषं स्मृतिशेषञ्च स्वजनबान्धवेभ्यो देशवासि-भ्यश्च जीविताभिरोदनसम्बलं समर्प्यति बहुशो दृष्टं श्रुतञ्च। पण्डित-प्रवराः पशुपतिनाथशास्त्रिणश्च तादृशानां क्षीणपुण्यानां मर्त्यावतीर्णानां केचनेति परिहर्त्तव्यः शोकसन्तापः, कर्त्तव्यश्च तथाविधमहाजनस्मृति-मेवोपजीव्यात्मनोन्नतिविधानमपनोदनञ्च कठोरसमयस्येति तत् स्मृतिमेव कीर्त्तयन्त आत्मानं पुनीमहे।

द्वादशसमाः समतीताः—न खलु तदानीमपि जाता संस्कृत-साहित्यपरिषत्, परमस्याः अग्रजेव छात्रसमितिनाम्नी काचिद् गोष्ठी समस्थाप्यत कैश्चिदस्माभिरेवास्मद्गुरूणां तत्रभवतां पूज्यपादानां श्रीमतां द्वारकानाथन्यायशास्त्रिणां पाठशालायामिति स्मर्य्यतेऽधुनापि विदितवृत्तान्तैर्बहुभिरेव सुधीभिः। तत्र खलु कदाचित् सायमधुना स्वर्लोकवासिनां परिषदः सभापतिचराणां महामहोपाध्याय-काली-प्रसन्नभट्टाचार्य्याणामाध्यक्ष्येणाभूच्छात्रसमितेरधिवेशनमेकं, यत्रास्माभिः रत्नावलीनाटिकामधिकृत्य वाचितोऽभूत् कश्चिन्निबन्धः। वातसनाथां दृष्टिं समुपेक्ष्यासीत्तत्र सौम्यमूर्त्तिः कस्यचन शुचिस्मितोद्भासितवदन-मण्डलस्य महाजनस्याविर्भावः। आदौ निश्चितमासीदस्माभिर्यदनेन केनचिदाङ्गलविद्यामात्रनिपुणेन विषयैषिणा भवितव्यमिति परं वाचिते निबन्धे सम्यगुच्चारितविशुद्धगीर्व्वाणवाणीसमलङ्कृतं तस्य

निबन्धसमालोचनमाकर्ण्य जातविस्मयैरस्माभिः कश्चित् सम्पृच्छ्य ज्ञातं यत् समालोचकमहाभागा मीमांसारण्यकेशरिणः पशुपतिनाथ-शास्त्रिपादा इति। निबन्धे तस्मिन् परःसहस्राः दोषाः समासन्, परं शास्त्रिमहाशयैः हंसक्षीरन्यायेन केवलं गुणमेव गृह्णद्भिर्मधुरया वाचा तथैव समुत्साहिता वयं यत् ततः प्रभृत्येवास्वाम तस्मिन् बद्धानुरागा-स्तेऽपि यावज्जीवनं समाचरितवन्तः सोदरस्नेहमस्मद्विधेष्वप्यकृतिषु। यदि तदनन्तरमन्तरान्तरास्माभिरपि कथमपि यथाशक्ति दैवी वागुपा-सिता निर्गन्धप्रसूनैस्तदपि तादृशानामुत्साहदानमूलमेवात्र नास्ति संशयः। ततो गते कियति काले प्रतिष्ठिताभूत् संस्कृतसाहित्य-परिषत् ;—तस्या जन्मनः प्रभृति सम्पादकरूपेण संस्कारादिकं विद-धानाः शास्त्रिपादाः प्राणैः पणैः कीदृशीमुन्नतिं कृतवन्तस्तत् कृतवेदिभिः परिषदः अन्तरङ्गसुहृद्भिः सर्व्वैरेव ज्ञायते। यातु आहिमशैलमा समुद्रञ्च अस्याः प्रतिष्ठा समुपलभ्यते, शास्त्रिपादा एव तस्य मूलमिति ब्रुवन्तो न कस्मिन्नपि अपराध्याम इत्याशास्महे।

अत्र शास्त्रिपादानां किञ्चित् स्वरूपं कीर्त्तयामः। कदाचिन्नष्ट-विभवं मे कश्चित् सुहृदमभियुज्य तस्य प्रतिपक्षैर्धनिकैश्वरमविचारा-लये (High-Court) व्यवहारः समुपनीतः। तत्राधिकृतानां प्राप्त-प्रवेशानाञ्च व्यवहाराजीवानां भृतिमात्रां निरूप्य—"हतोऽस्मी"ति-निश्चयं मित्रप्रवरम् आलोक्य विभवक्षयञ्चास्य विचार्य्य बन्धुसहायेन मया शास्त्रिपादाः शरणमुपगताः। शास्त्रिमहाभागास्तदानीं खलु तत्र विचारालये व्यवहाराजीव-कर्म्मणि आसन्, अतो यदि कश्चिदुपाय-स्तैः प्रदर्शितः स्यादिति मन्वानेनैव मया तथा कृतमासीत्, परं ते तु श्रुतसर्व्ववृत्तान्ता व्यवहारान्तरव्यापृताः स्वयमशक्नुवन्तोऽपि तत्क्षणा-देव सुहृदन्तरमुपसृत्य ममायं व्यवहार इति तमनुरुध्य तेनैव कर्म्म-जातं निरवाहयन्—कर्म्मसमाप्तौ तु मयि स्नेहमनुस्मरन्तः मामभि-लक्ष्य 'त्वयायमानीतः, विभवक्षयश्चास्य महानेव सञ्जात इति पश्यामः

श्रतो भाग्यहतोऽयं न पुनरर्थग्रहणेन पीड़नीयः' इति वदन्तो भृति-प्रदानोद्यतमपि मे सुहृदं मधुरया वाचा निवर्त्य स्वगृहं प्रास्थापयन्।

शास्त्रिमहोदयानां श्लाघाविरहितं शास्त्रप्रागल्भ्यं विनयार्जवशौर्यादिकञ्च सर्वैरेव परिदृष्टम्। अत्र तस्य गुणग्राहितायाः स्वभावसिद्धविनयस्य च किञ्चिन्निदर्शनं प्रदीयते। अस्ति मे कश्चित् सुहृत् काव्यव्याकरणदर्शनादिषु परमप्रवीणः, यः संस्कृतं सम्यगधीत्याङ्गलविद्याध्ययनक्रमेण विश्वविद्यालये तेषामन्तेवासी समभवत्। कदापि कथाप्रसङ्गेन अपि स……स्मर्य्यते भवद्भिरिति मया पृष्टास्तेऽवदन् "अहो कथं न स्मर्य्यते तथाविधो जनः, भवतु नामान्तेवासी परं विद्वत्तया सर्वथा स नमस्यः।" उक्तिरियं सर्वथा "गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः" इतिवादिनीं भगवतीमरुन्धतीं स्मारयति।

एवं कति नाम गुणाः स्मर्य्यन्ते शोकविकलान्तःकरणैः? मासद्वयात् प्राक् शास्त्रिपादैस्तद्गृहे एव जाता शेषसङ्गतिर्यत्र पत्रिका-प्रकाश्य-प्रबन्धविरचनार्थं महानाटकस्य टीकादिसमन्वितस्य प्रकाशनभारग्रहणार्थञ्चासकृदुपदिष्टा विसर्जिता वयम्, अपि च तत्रैव विश्वविद्यालयस्य प्रवेशिकापरीक्षार्थिनामवश्यपाठ्यत्वेन निर्णीताया गीर्वाणवाण्याः परिपन्थिनोऽधिकृत्य दर्शनादिषूपलभ्यानां पारिभाषिकसंज्ञानां कोषनिर्म्माणमधिकृत्यापि प्रावर्त्तत या कथापद्धतिः सेदानीं स्मारयति तदीयं मधुरदर्शनं मुखमण्डलम्। को नाम स्म जानाति यत् स एव चरमस्तैः सह गोष्ठीसंलापसुखस्य, तदेव तेषामपुनरावर्त्ति नेत्रानन्दकरं दर्शनं, तदेव शेषवीक्षणं तेषां शुचिस्मितस्य, तदेवान्तिमाकर्णनं तेषां मधुरवचसां, केन नाम ज्ञातं यदभ्यर्णविपदागमा परिषत् तदीयस्वजनमण्डली च? अथवा वरमज्ञानं रहस्यानां—विदधातु विधिदुर्विलसितसहस्राणि स्वकामस्य, प्रहरतु दैवं यथेष्टं—किं सार्वजनिकमनिष्टमतः परमपि स्यात्? अनुभूयतां कामं दैवी

सम्पद् देवभूयं गतैः, किमस्ति सन्तापसर्वस्वानामस्मद्विधानां तेभ्यो नवोष्णाश्रुनिवापमन्तरेण ;—तन्मुञ्चन्तु वाष्पसलिलमजस्रं वान्धवाः, श्रीहरिपादाः कीर्त्तिशेषतां स्मृतिशेषताञ्च गता इति ।

---

## शोकसान्त्वनम्

[ निबन्धकः—श्रीहरिपदकाव्यस्मृतिमीमांसातीर्थः ]

प्रोन्मीलन्मधुगन्धवाहिपवने संफुल्लचूतद्रुमे
शीतांशुस्फुरदंशुजालनिचिते भूमण्डले सर्वतः ।
हा कस्माद् विकरालकालजलदेनाच्छादितश्चन्द्रमा
नेत्रानन्दकरः कलङ्करहितो राजा द्विजानामयम् ॥ १

अम्भोधिः परिशुष्यदल्पसलिलः कच्छोऽपि सम्भाव्यते
जातोऽयं तुहिनाद्रिरुन्नतशिरा यातोऽद्य चित्रं न तत् ।
किन्त्वेकं तव सर्वभूतसुहृदोऽकाण्डे तिरोधापनं
न प्रत्येमि विलोकयामि परितस्त्वत्पूतगौरच्छविम् ॥ २

शान्तस्निग्धवपुः सदा स्मितमुखञ्चालौकिकी धीरता
तेजोनम्र-विनेयभावललितं स्वाभाविकं मण्डनम् ।
नैवान्यत्र यवीयसः पुरुगुणे त्वत्तो नरे वोक्षितं
धीमन्नद्य जगत् समस्तमभवद् गाढान्धकारावृतम् ॥ ३

यासौ संस्कृतभारती सुमहती जीर्णा पुराणापि ते
सत्पुत्रेण यथार्चनैरनुदिनं संसेविता वर्द्धिता ।
साद्य त्वामविलोक्य पूतपरिषन्मध्ये वरेण्यं सुतं
मन्ये वाक्यपदाङ्गभङ्गविवशा पूर्व्वां दशामेष्यति ॥ ४

नूनं त्वं पुनरप्यमर्त्त्यपरिषन्मध्ये कलां शिक्षितुं
हित्वा मर्त्त्यतलं गतः परिषदः चेमप्रबुद्धस्थिरम् ।

नो चेत् कान्ततनूरपाण्डुरमुखो दारात्मजातप्रसू-
र्नोपृच्छ्य प्रियसान्त्ववाक्यमवशोऽयासीद्ध्रुतं स्ववेशो ॥ ५
स्निग्धं चन्दनलेपनोपममिदं तच्छोकदग्धे हृदि
शान्तिं नो वितनोति तीव्रदहनज्वालावलीढ़े परम् ।
यत् पश्यामि सुरेन्द्रवासभवने सत्पुस्तकाढ्येऽधुना
शास्त्रालोचनलोचनः पशुपतौ राजेव संराजते ॥ ६

———

स्वर्गत-पशुपतिनाथशास्त्रिणः परलोकगमनमुपलक्ष्य

## शोकोच्छ्वासः

[ निबन्धकः—श्रीइन्दीवरकृष्णकाव्यतीर्थविद्याभूषणस्मृतिविनोदः ]

मृत्यूदन्तमरुन्तुदं पशुपतेः श्रुत्वाधुना शास्त्रिणः
स्वान्तं शोकहुताशनो भृशतरं दन्दह्यते मामकम् ।
सौजन्यं करुणा तथा गुणचयः पीयूषवद्भाषितं
यत्रैते निवसन्ति कोविदमणौ हा ! कुत्र स प्रस्थितः ॥ १
रूपं मारविनिन्दि वाक्यममृतं चाशाविकीर्णं यशः
कुन्देन्दोरशशाङ्कशङ्खविशदं यस्याभवत् प्रोज्ज्वलम् ।
लोकानामुपकारकृत्यनिपुणः प्रोत्तुङ्गमानोऽञ्जसा
हाऽकाले हतकालघोरकवले प्राज्ञः स लीनोऽभवत् ॥ २
कासारे मृदुवातकम्पितमहो सद्भृङ्ग-संघस्तुतं
व्याकोषाम्बुरुहं कथं विदलितं मङ्क्षु त्वया दुर्विधे ! ।
यत् स्मेराननसारसं जनगणः संवीक्ष्य तुष्टोऽभवद्
हाऽकाले हतकालघोरकवले लीनोऽभवत् स द्रुतम् ॥ ३

नानाशास्त्रगवेषणासुनिपुणः संख्यावदानन्दन-
स्तुङ्गं मानममन्दमन्दरनिभं प्राप्तः स्वशक्त्या हि यः।
साहित्यैकसभातरिप्रचलने यः कर्णधारोऽभवद्
हाऽकाले हृतवान् कथं सुमनसं तं क्रूरकालो द्रुतम् ॥ ४
यद्रूपं स्फुटपद्मसन्निभमहो पान्थायते मानसे
नृणां यस्य कथामृतं श्रवणयोरद्यापि तैः स्मर्यते।
प्रोद्दामोद्यमशालिनं सकरुणं तं लब्धवर्णं विना
स्वान्तं शोकपयोनिधावविरतं सन्तप्तमुन्मज्जति ॥ ५

मातः! सरस्वति! सुतं यमवाप्य रत्नं
विद्यास्वरूपगुणसौम्यमुदारभावम्।
अङ्के निधाय च मुदा यमभूः कृतार्था
हा दूयसे नहि शुचा तमृते किमु त्वम्? ॥ ६

अकस्माद् वज्रसम्पातसम्मितस्तस्य धीमतः।
नवे वयसि हा! नाशः कस्य चित्तं क्षिणोति नो? ॥ ७
अधिनायकमित्य यं मुदा शशिनेव क्षणदा पुराभवः।
अधुना तमृते विलोक्यसे वत! साहित्यसभे! हतोत्सवा ॥ ८

दिशि दिशि तदभावात् सूरयः शोकदूना
अहह नियतमश्रूद्गूढदुःखास्त्यजन्ति।
निखिलजननिवासा रत्नहीना हि पृथ्वी
मम निविड़तमोभिर्मानसं पूर्णमद्य ॥ ९

---

## पशुपतिनाथशास्त्रिणामकालकालकवलितत्वात्
## शोकोच्छ्वासः

[ निबन्धकः—श्रीपुलिनविहारी दाशगुप्तः वि. एल्. ]

हन्त श्रुती वितुदती विषवर्षिणी सा
वार्त्ता विपत्तिजननी कुलिशेन तुल्या।
पर्य्याकुलां विकुरुते जनमण्डलीं यद्
अस्तं गतः पशुपतिर्नरदेव-सूर्य्यः॥ १

कर्णावितं वधिरतां कथमाशयो वां
त्वमिह का वुधवरे धरणीं विहाय।
लोकान्तरं परिगते नितरां विषण्णान्
शोकानलैः सखिजनान् परिदह्य सर्व्वान्॥ २

किं श्रूयते हृदय-मर्म्म-विदारणोऽयं
हा हा रवः सकलशान्तिनिराकरिष्णुः।
दीनाः खलु प्रतिदिनं श्वसनैः सुदीर्घै-
रुष्णाश्रुभिः परिजना रुदितं श्रयन्ते॥ ३

हाहा कृतान्तहतक! प्रवलो ह्यनर्थो
मायाविहीनमनसा सहसा कृतोऽयम्।
पाषाणवद् दृढतरं नियतं ततो वा
चित्तं नितान्तकठिनं कलुषीकृतं ते॥ ४

हा तात विश्वजगतां करुणा कुतस्ते
छिन्नस्त्वया पशुपतिद्रुम इत्यकस्मात्।
निक्षिप्य दुःख-सलिले परिशोचतोऽद्य
ज्वालाविदग्ध-हृदयाननुजीविनोऽस्मान्॥ ५

प्रख्यातवंशविभवः सुधियां वरेण्यो
जात्या द्विजो मनसिजप्रतिमः सुरूपः।

विद्यावतां विनयिनां प्रभया प्रदीप्त
आसीद् गुणैः समुदितः सवितेव भास्वान् ॥ ६
यस्य प्रफुल्लवदने हसितं निषण्णं
दुर्भाषितं क्वचिदपि स्खलितं न चास्यात् ।
निष्ठासुवृत्तिनिरतो यतिमार्गचारी
त्रैलोक्यनाथभवनं गतवान् महात्मा ॥ ७
आ शैशवादवहितश्चरणारविन्दं
वाण्या निसेवितवतो बहुधा विलासः ।
आसीत् सदा सरसिजाननरम्यभाति-
र्यस्य प्रशान्तमनसः क्व नु वर्त्ततेऽसौ ॥ ८
गीर्व्वाणवाणीसमलङ्कृता या
साहित्यसंसत् तव कीर्त्तिकेतुः ।
विमन्त्रिकं राष्ट्रमिव प्रशोच्यां
दशां प्रपन्ना भवता विहीना ॥ ९
विद्यादाने बहुविधगुणैस्तोषयंश्छात्रमुख्यान्
ख्यातिं प्राज्ञां सुविपुलतमां विश्वविद्यालयस्य ।
वैदेशीभिर्बहुपरिचितो म्लेच्छभाषाभिरासीत्
लेभे नानाविरुदखचितं राजसम्मानपत्रम् ॥ १०
यासि प्रेम्णा सुविनयधनिन् मूर्च्छयन् बन्धुवर्गान्
स्वर्लोकं त्वत्परिगतजनान् वाङ्मनःकायखिन्नान् ।
कालस्रोतो वहति नियतं को नु तत् संरुणद्धि
कीर्त्तिस्तम्भः समुदितशिरा राजते ते चिराय ॥ ११
चलति सपदि नित्यं चित्त-वित्तं नराणां
प्रतिदिनमनुयाति प्रौढ़-कैशोर-गर्व्वः ।
चयभयमरणादिः सम्प्रदायुश्च तद्वत्
पशुपतिगतजीवाः शान्तिमार्गं लभन्ताम् ॥ १२

पशुपतिनाथस्य स्वर्गतौ

# यत्किञ्चित्

[ निबन्धकः—श्रीशिवप्रसादभट्टाचार्य्यः ]

'भवति सुभगत्वमधिकं विस्तारितपरगुणस्य सुजनस्य।
वहति विकसितकुमुदो द्विगुणरुचिं हिमकरोद्योतः॥'

तत्रभवतां देशविश्रुतानामचिरोपरतानां पशुपतिनाथशास्त्रिणां चरितकथाविनिवेदनार्थं विनियोजिताः संस्कृतसाहित्यपरिषत्पत्रिका-परिचालनाधिकारिभिर्वयमद्य बहुमानभाजनत्वमासादिता अपि भीत-भीता इवात्र कृत्ये प्रवर्त्तामहे ;—यतः को नाम कृतौ निपुणधिषणा-सनाथोऽपि कृतिनामात्मनीनमवदाननिधानमाविष्कर्त्तुमुत्सहेत, को वाऽत्मानं प्रत्यवायिनं मन्यमानस्तद्गुणगणख्यापकाभिरूपवृन्दवर्द्धित-कोषं कीर्त्तिसन्दोहनिर्घोषघोषममन्दमपि मन्दतमया स्वकीयया भाषाकलया कलयितुं विरमेत् ? स्मरामो वयमद्य सौत्सुक्यमनु-ध्यायामश्च कति एव दिवसांस्तेषां महनीयमहिम्नां कैशोरेऽपि विनय गम्भीरगरिम्णां स्वच्छस्मितस्फुरितधाम्नां सतीर्थतामाप्नुवतामस्माक-मशेषं सुकृतलेशं, स्मरामश्चानुक्षणमुत्तरजीवने लब्धयशसां मितभाषिणा-मजितकामिनां समवृत्तीनामप्यसमवृत्तीनां मानिनामप्यमानिनां "मयाऽस्योद्विजते वाचा नालोक्यान्तामुदीरये" इत्यभियुक्तस्मृतिमनु-बध्नतां श्रुतिसरणिमनुसरतां मधुरञ्चव्यमालपतां तेषां सौजन्यजन्यं सुभगत्वम्। यस्य युवजनमनःप्रसादने वृद्धोपसेवायाञ्च सममेव तात्पर्य्यं, राजविद्यायां स्वविद्यायाञ्च सममेव वैदग्ध्यं, मुनिमतमीमां-सायां गुणिजनगणनायाञ्च सममेव विपश्चित्त्वं, स खलु केषां स्तुतिवचसां विषयो नाम ? परं महदिदमाकूतकरमस्माकमश्मसदृशानामवसाद-भाजां कर्मविमुखानां कुतः किल तदसममजरमव्ययं तेषां शास्त्रि-

महोदयानां प्राणशक्तेरवक्षमूलमुत्सारितमभूदिति, महांश्चायमनर्थपातो यत् साऽनवद्या सञ्जीवनविद्याऽकाण्ड एव स्वदेहविलयविपदमितेति। परममिदमनुतापकारणं गीर्वाणवाणीनिष्णातानां यत् सनातनशास्त्र-मर्ममणिवैकटिकानां विकटमास्फालयतां प्रतीच्यशिक्षाशैलीशीलन-शैलूषायमानानामिदानीन्तनानां मध्ये विरला एव तादृशाः सुधियो यैः प्राणपण्यैरमरभारतगवीविभवचौरधारासारस्वारस्यैकनिष्ठैर्भूयते, यैश्च शिशुभिरिव वृद्धाभ्यासे सततमुदितैरप्रमादिभिः प्राचीनविद्या-ऽम्बुधिनिधिपारगेषु पूज्यचरणेषु विनयाधाने प्रह्वीभावस्तेषां साहायक-मधिगन्तृभिरार्षशास्त्रोद्धारकृति प्रकृतप्रयत्नपरता च समाश्रीयते। अतः खल्विदं कृपणमर्थ्यते—

विदुषे पशुपतिनाथ! प्रातिभकाया-कृमव्यूहाय।
अञ्जलिरयमारचितो ननु ते विद्यासगोत्राय ॥ १

समयोदितकम्रनम्रताऽमृतधाराकृततापनोदनी।
सहजा शुभकीर्त्तिकौमुदी द्विजराजाधिक! ते प्रभासते ॥ २

सरलता स्थितधीः कृतवेदिता त्वयि गता पदमप्रतियोगिनी।
स्मृतिरतो भवतात्तव सर्वदा विधुरतामतिमोहविघातिनी ॥ ३

* * * * * * *

परिषदियमधुनाऽधन्या निरवलम्बा तदम्बेव शोचनीयतमा संवृत्ता। यद्वा किमत्र मन्तव्यम्? तस्य महात्मनो नामशेषस्य यशः शरीरशोभिनो जीवितसर्वस्वभूता सैवाद्य जीवननिबन्धनं जाता देव-वाणीसेविनां जनिमताम्।

निरवधिमृषाशोकोच्छ्वासान्न नाम निरन्वया
वितरति हितं सान्त्वाकूतं वदानपरम्परा।
तदिह गहने पर्यन्स्त्वाने निवारय लोचने
कलय सुकृतं स्मृत्वाऽतीतं निमीलतु नीलिमा ॥ ४

कस्तावदाश्वासोपायस्तदार्त्तिखिन्नानां दैवहतकहतानां देश-वासिनाम् ? अथवा साध्विदमुच्यते—

यल्लीला कुरुते ह्यशोकमपि हा ! शोकान्वितावान्धवं
गौरीनाथमनाथमङ्ग ! च मनाग् भिक्षार्थिनं मा-धवम् ।
सृष्टिर्यस्य पुनः समाजरचनव्याजैर्जनाः पञ्चषा
जीयासुः कुशला विधेरिह कलास्तस्येशितुर्भूयसा ॥ ५ इति

---

# शोकनिवापाञ्जलिः

[ निबन्धकः—श्रीधूर्जटिप्रसादकाव्यतीर्थः ]

किं सूर्य्यः पतितोऽम्बरादसमये कच्च्युतो दीप्तिमान्
वाणीवाससरित् किमद्य सहसा शोषं गता साम्बुजा ।
किं भग्नं शिखरं हठाद्धिमगिरेः कल्पान्तवात्याहतं
सञ्छिन्ना सुरभारतीकरगता किं सप्ततन्त्री चिरात् ॥ १

रसं यो विद्वद्भ्यो दिनकर इवादाय नितरां
चिरं पोषं पोषं परिषदमिमां रचतितराम् ।
अकाण्डे स प्रायाच्चरमशिखरं हा पशुपतिः
सतामीदृक्सङ्गं क्व नु वयमिमो वा त्वयि गते ॥ २

विदामेको गम्यो जलनिधिरिवोदारगरिमा
महामानोत्तुङ्गो हिमगिरिसदृक् संश्रयगुरुः ।
प्रशान्तस्वान्तो यश्चिरकुशलबुद्ध्या बुधगणे
प्रयातः सत्कीर्त्तिः स हि नयनयोर्दैवनिहतः ॥ ४

सदाचारो नष्टः सुचरितकथा लुम्पति चिरान्-
निरङ्कः पूर्णेन्दुर्घनतमसि लीनोऽनवसरे ।
महापापग्रस्ता व्रजति सुरभाषा प्रविलयं
स निर्व्याजानन्दः परिचयविधौ क्वाप्यपसृतः ॥ ४

विधुरं किमतः श्रुतिं गतं ननु वज्रादतिदारुणं हि तत् ।
शिरसीव घनात् प्रविच्युतं सहसाच्छिन्न इहान्तरान्तकम् ॥ ५
क्व भवांश्चलितो विदाम्पते ! सुहृदो जीवितवद्विहाय नः ।
सुरसद्मगतः प्रवीच्वतां किमुपायातमिदं दशान्तरम् ॥ ६
गुरुशोककृतं मनस्तटे विषशल्यं विनिखातमद्य यत् ।
नहि कोऽपि विशल्यकृज्जनो भवदन्यो वद को नु शान्तिदः ॥ ७
अधिगम्य कृपारजःकणान् बहवो ये च गताः कृतार्थताम् ।
ननु पश्य शुचा निराश्रयैर्नयनास्रैर्धरणी प्रसिच्यते ॥ ८
हयरश्मियुतः प्रयाति भोः किमु सूतेन विना रथः पथा ।
इह संस्कृतसंसदन्तरे क्व नु यन्ता त्वदृते भविष्यति ॥ ९
प्रतिभा तव सर्व्वतोमुखी रचिता वा सकलातिशायिनी ।
अधुना स्वरिते त्वयि प्रभो चिरमस्तं विगते च ते न किम् ॥ १०

हाहा सज्जनहृत्सरोजमधुहृत् ! हा प्राज्ञचक्रेश्वर !
हाहा वङ्गवसुन्धराबुधमनोराज्याधिकाराधिप ।
दुःस्थानामभयप्रद ! क्व नु भवानेवं लपन्तो वयं
दीनैर्दीनतमैर्वचोभिरिह भो हाहाकृतिं कुर्म्महे ॥ ११

---

# स्मृतितर्पणम्

[ निबन्धकः—श्रीभवभूतिविद्यारत्नः ]

न जाने माघमासस्य द्वाविंशरजनी किम्भूतातिकठोरदुर्ग्रहरोषाक्षि-निरीक्षिता प्रभाता, यद् यथाभ्यासं स्वकर्मस्थले राजकीयसंस्कृतविद्यालये गमनमात्रेणैवाकस्मादशनिपातेनेवातर्कितयाकैशोरसुहृद्वरस्य पशुपतिनाथशास्त्रिणोऽकालस्वर्लोकगमनवार्त्तया नितरां पीड़ितहृदयः, "अहो ! तमःपापकौटिल्यपूरितेऽस्मिन् कलिदेवताधिष्ठिते जगति सत्त्व-

पुण्यसारल्यमूर्त्तिः स खलु महात्मा न पुनर्दग्धनयनेनावलोकयिष्यत" इति विचिन्तयन्तमात्मानं शोकोर्म्मिसंवेगविभग्नधैर्य्यमर्य्यादं न कथमपि संयमयितुमशक्नवम्। यद्यपि नियमेन मया गृहीतं तद्दिननिर्दिष्टं वागिन्द्रियेण साध्यमात्मनः पाठनकार्य्यं, तथापि कण्ठमार्गावरोधिना शोकवाष्पभरोच्छ्वासेन विकलीकृततदिन्द्रियो वाणीमेकामपि समुच्चारयितुमक्षमो गृहीतमूकधर्म्मा मद्दशादर्शनकातरैः सरलप्राणैः शिशुभिः परमौत्सुक्येन पुनः पुनस्तत्कारणं पृष्टोऽपि नोत्तरं ददानः साश्रुनयनः केवलमूर्द्ध्वं निरैक्षे। एतदतिदुःसहं कर्म्मभावयोर्महाद्वन्द्वमवसायितं खलु स्वर्गीयशास्त्रिमहोदयस्यालौकिकगुणसाकल्येनाकृष्टचेतोभिर्महामान्यैरध्यक्षमहोदयैः प्राक् कान्तरूपेण ततः परिचालकसदस्यतया तेनाधिष्ठितस्यैतद्विद्यामन्दिरस्य तत्सम्मानरक्षार्थमद्गावकाशमाज्ञापयद्भिः, यदा हि कर्म्मचिन्तालेशशून्यं स्वचित्तमविच्छेदसमुदितासु तद्गतभावनापरम्परासु निर्व्विघ्नं नियोजयितुमपारयम्। कदाचिच्चिराय तेन परित्यक्तानां स्थविरजननीप्रमुखानां तत्स्वजनानामसहायदशां विचिन्तयता, कदाचित् कर्णधारहीनाया इव तरण्यास्तद्विरहितायाः संस्कृतसाहित्यपरिषदः परिणामं भावयता, कदाचित् प्रवलसपत्नीतनयैरिव पाश्चात्यभावोन्मत्तैर्वङ्गवाणीसुतैरिदानीं निष्करुणं निर्य्यातितायाः संस्कृतभाषायास्तादृशभक्तसुतविहीनाया निदारुणदुर्गतिविषयं वितर्कयता, कदापि वा तस्य निर्मायं मर्त्यदुर्लभं प्रणयवृत्तं संस्मरता, सदैव च हृदयचित्रार्पितां तस्य रागरञ्जितां चिरसौम्यमूर्त्तिं मनश्चक्षुषा विलोकयता, न ज्ञायते, मया कियता कष्टकष्टेनातिवाहितः स दुःखदिवसः।

यस्मिन्नेव शुभावसरे राजकीयसंस्कृतविद्याभवनं वङ्गोज्ज्वलरत्नभूतैः परममान्यैः श्रीयुतहरप्रसादशास्त्रिमहोदयैरध्यक्षतयाधिष्ठितम्, अध्यापकतया च पूज्यपादैः श्रीयुतकामाख्यानाथप्रमथनाथप्रमुखैः स्वनामधन्यैर्विद्वत्कुलवरेण्यैरलङ्कृतमासीत्, तदा तत्राधमच्छात्ररूपेण

प्रविष्टस्य मम सौभाग्यवशाद् वर्षत्रयं पशुपतिनाथ-सतीर्थत्वमघटत। वीजरूपेण तस्य चेतसि स्थिता ये खलु महागुणाः कालेन प्रवृद्धिं गताः पश्चाल्लोकख्यातमहाद्रुमत्वेन परिणताः, तदैव सामग्र्येण तानङ्कुरिता-नवलोक्याध्यापकमण्डलैराशोद्दीपितहृदयैराशंसितं तस्य भविष्यज्जीवन-साफल्यम्। आवाल्यात् सर्व्वास्वेव वार्षिकपरीचासु विद्यालयान्ते-वासिनां सतीर्थानां शीर्षस्थानमधिकुर्व्वतापि तेन न लेशतः प्रकाशितो लोकसाधारणश्चित्तविकारो, येन हि स स्वगुणसमाकृष्टचित्तानामध्या-पकपादानां सतीर्थानाञ्च सममेव प्रीतिभाजनमभूत्।

अधुना पाटलीपुत्त्र-(Patna) विश्वविद्यालयस्याध्यापकपदमल-ङ्कुर्व्वाणो वङ्गीयविद्वद्वराणामन्यतमः शास्त्र्युपाधिकः श्रीयुत-सुरेन्द्रनाथ-मजुमदारश्चिकित्साशास्त्रपारंगतौ प्रसिद्धनामानौ श्रीयुत-तुलसीचरण-वनविहारिदेवशर्म्माणौ संस्कृतविद्यालये तस्यावाल्यसतीर्थावास्ताम्। यद्यपि परौ द्वौ तत्र पाठसमाप्तिमनपेक्ष्य चिकित्साशास्त्राध्ययनाया-न्यत्र गतौ सुरेन्द्रनाथस्त्वापाठसमाप्ति तस्य सतीर्थ आसीत्। परम-धन्यतया मे समभवत् प्रतिभान्वितानामेतेषां चतुर्णां समवायदर्शन-सौभाग्यम्। अन्योन्यसमकक्षाणामेतेषां विद्वेषरहितो मैत्रीभावः प्रवलमाचकर्षेतरेषां मद्विधसतीर्थानां चेतांसि। नवप्रविष्टेषु सतीर्थेषु साम्प्रतं गौहाटीविद्यालयस्य प्रधानसंस्कृताध्यापकपदे वर्त्तमानः परम-पण्डितः श्रीयुतलक्ष्मीनारायणचट्टोपाध्यायो मनीषितया तेषां तुल्य-पदमधिचकार। यद्यप्येतैः पञ्चभिरेव रत्नभूतैस्तदानीं समलङ्कृत-मसीत् संस्कृतविद्यागृहं, तथापि धीरबुद्धिः पशुपतिनाथोऽविसंवादं सर्व्वेषां मुख्यतया पर्य्यगण्यत। नासीत्तदा विद्यालयसम्पृक्ताना-मध्यापकच्छात्त्रकर्म्मचारिणां कोऽपि जनो यो हि तरुणवयसोऽपि प्रगाढ़विद्यावत्त्वेनाध्यापककल्पस्य तस्य प्रियदर्शनस्य गुणपक्षपाती नाभवत्। एतावत्तस्यासीच्चित्तौदार्य्यं यद् विद्यावुद्ध्योः स्वस्माल्लघी-यांसमपि मां परमसौहार्द्देन गृह्णन् स्वाध्यापकपुत्त्रतया "अग्रज"

सम्बोधनेनाकारयत्। अग्रजात्वयलक्षणा मयि सा प्रीतिराजीवनं तेन रक्षिता, पश्चाद् विपुलपदसमृद्धिमुपगतेनापि न च परित्यक्ता।

इतरतरुणजनानामिव न तस्य स्वभावचापल्यं कदापि पर्य्यलक्ष्यत। काव्यालोचनप्रसङ्गेन लब्धावसरा अपरे सतीर्थाः कदाचिद् वयोधर्म्मेण रससंलपनाय प्रावर्त्तन्त, स तु स्वभावगम्भीरो बाल्यपरिणयहेतोस्तदानीं जनकपदं गतोऽपि छात्रविगर्हितात् तादृशालापान्नियतमेव विरत आसीत्। जितेन्द्रियस्य तस्य च बाल्यपरिणयो नाभवत् पाठप्रत्यूहहेतुः। "विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः" इति च धीरलक्षणं सर्व्वथा तस्मिन् प्रायुज्यत।

संस्कृतविद्यालयस्य निम्नतम-श्रेणीत आरभ्य विश्वविद्यालयस्य सर्व्वोच्चपरीक्षापर्य्यन्तं सर्व्वत्रैव कृतित्वेन साफल्यार्ज्जनात् स शास्त्र्युपाधिना भूषितः, गभीरविद्यावत्तया च लोकदुर्लभेन "डक्टर"ख्योपाधिना सम्मानितः, साहित्यदर्शनशास्त्रपारदर्शितया च तत्तद्विषयेषु विश्वविद्यालयस्याध्यापकपदे नियुक्तः, विचक्षणतया च विश्वविद्यालयप्रधानसंस्कृतपरीक्षकतया निर्व्वाचित—इत्येतानि लोकविदितानि तस्य चरितवृत्तानि तल्लिखनप्रसङ्गेन समुल्लिख्य नेष्यते रोमन्थनविधिना प्रवर्द्धयितुमेतत्प्रबन्धकलेवरम्। तथापि पुनरावृत्तिशङ्कया यदि तस्य विपुलज्ञानेऽपि मौनत्वमुच्चपदतायामपि विनीतभावः, पाश्चात्त्यविद्यावत्तायामपि प्राच्यभावरक्षणशीलत्वं, परमसमृद्धावपि निर्विलासब्राह्मण्यनिष्ठत्वं, नियतसाधुचेष्टितेष्वप्यात्मोद्घोषणवैमुख्यं, नव्यतायामपि प्राचीनभावरतिः, धीरतायामप्यशेषकर्म्मपाटवमित्येतन्महात्मगुणसमुच्चयो न समुल्लिख्यते, तर्हि नूनमेव पाठकसमक्षं मे तच्चरितानभिज्ञत्वं प्रकाश्येतेति विचिन्तयता न शक्यते मया परिहर्त्तुं तल्लिखनकण्डूयनम्।

बन्धुजनेषु तस्य प्रीतिः केवलवाक्यतया न कतिपयरिक्तमधुरवाक्येषु पर्य्यवस्यत्, परमान्तरिकतया तु कार्य्यत एव प्रकाशिता।

लोकसमाजदेशसाहित्यानां समुन्नमनाय तस्य मनसि ये ये सद्भावा अजायन्त, जीवितपणेनापि स तान् सर्वान् कार्य्यत्वेन परिणमयितुं प्रायतत। एवं संस्कृतसाहित्यस्य कठोरकालकृतां दुरवस्थामवलोक्य तदुज्जीवयितुकामेन तेनाविरामनिःस्वार्थश्रमेण नगरमध्ये प्रतिष्ठापिता संस्कृतसाहित्यपरिषत्। तस्याः परिषदश्च कृते स खलु महात्मा त्यक्ताहारनिद्रो नगरवास्तव्यान् ख्यातनाम्नः सम्भ्रान्तजनानुपागतो निपुणतयैतस्याः प्रतिष्ठापनप्रयोजनमवगमय्यैतावत्तान् स्वपक्षपातिनश्चकार, यत्ते परमादरेण तदर्थं नियतसाहाय्यदानमङ्गीकृतवन्तः। एवं तस्य समुद्यमेनोपक्रान्ता परिषद् विद्योत्साहिभिर्भूस्वामिवर्गैरानुकूल्येन लक्ष्यमाणा, शास्त्रपारगैर्वाग्देवीवरपुत्रैश्च यत्नेन पाल्यमाना, सुरभारतीसेवकैस्तरुणविद्यार्थिभिश्च सबहुमानं सेव्यमाना, सुयोग्यजनसम्पाद्यमानां स्वनामप्रसिद्धां निखिलशास्त्रतत्त्वालोचनगर्भां संस्कृतमुखपत्रिकाञ्च प्रकाशयन्ती, लोकनयनान्तरालस्थितानि विविधलुप्तसंस्कृतपुस्तकानि च मुद्रणव्यापारेण वहिः प्रचारयन्ती, लिखनभाषणाद्यवसरप्रदानेन नव्यसंस्कृतसाहित्यिकांश्च प्रोत्साहयन्तीदानीं नगर्य्यां वाचो देव्याः सुमहल्लीलानिकेतनमिव वर्त्तते।

अवसरेऽस्मिन्नेतत् खलु वक्तव्यतया विद्यते यत्, प्रतिष्ठापितायां संस्कृतसाहित्यपरिषदि, तत्कर्म्मबहुलप्रचारार्थं यदेकस्याः संस्कृतमुखपत्रिकायाः प्रकाशनमावश्यकमासीत् तदा वङ्गेष्वद्वितीयमस्मत्तातपादैर्हृषीकेशशास्त्रिमहोदयैः प्रवर्त्तितं "विद्योदय"पत्रं तदात्मजाभ्यामावाभ्यां कथञ्चित् सम्पाद्यमानमवलोक्यापराभिनवपत्रप्रकाशापेक्षया प्राचीनविद्योदयस्यैव परिषदः प्रचारणं समीचीनं मन्यमानः अपि च पितृस्थानीयैरध्यापकपादैः प्रवर्त्तितस्य वङ्गेषु महादरार्हस्य विद्योदयस्य चिरपक्षपातितया विघ्नसङ्कुलेऽस्मिन् संसारे अकालनाशमाशङ्कमानः परिषद्धस्तोपस्थापनेन यदि तस्य स्थायित्वं संघटेतेति च मनसा चिन्तयन्नस्मत्सकाशे स विद्योदयस्य परिषदन्तर्भावप्रस्ताव-

मकरोत्। तत्र प्रस्तावे यद्यप्यावयोस्तत्पत्रसम्पादकत्वं पूर्ववत् संर-क्षितमासीत्, तथापि परमाधन्यत्वेनावां भ्रान्तचित्तावस्मूलकस्वाधि-कारभ्रंशशङ्कया न सम्मतिं प्रादद्व। अहो अचिरादेव प्राप्तमितस्या अविमृश्यकारितायाः फलम्। यतः क्षीणशक्त्योरावयोः स्वामित्वमस-हमान इव विद्योदयो वर्षाभ्यन्तर एवास्माल्लोकाच्चिराय प्रस्थितः।

आवां पुनस्तत्प्रस्तावं प्रत्याचक्षाणावपि न तस्य चिरमर्षणशीलस्य लेशतोऽप्रीतिभागिनौ सञ्जातौ। यतस्तेन न केनचित् स्वार्थव्यपदेशेन स प्रस्तावः कृतो येन हि तत्प्रत्याख्यानेन स्वार्थनाशात् तस्यावयोः कोऽप्यमर्षः प्रजायेत। स तु केवलमावयोरदूरदर्शितया परं दुःखितो बभूव। तद्दुःखमपि विद्योदयस्थितिकाले न तेन घृणाक्षरेण व्यक्तं, विद्योदयविलोपात् परं तु यदि किञ्चित् प्रकाशितं, तत् सोदरोपमयो-रावयोर्दुःखस्योपरि दुःखजननमभिलषता परोक्षमेव। ईदृशं लोका-नुरञ्जनं नाम तस्य परमधनमासीत्।

दुरदृष्टवशादसमापितविश्वविद्यालयाध्ययनस्य मम विद्योदयो-परमात् सर्व्वं प्रतिष्ठाकारणं विनष्टमवलोक्य दयार्द्रहृदयः स यथा मे संस्कृतलिखनाभ्यासोऽपि तेन सह न विलोपं गच्छेत्, तथाभिलषन् संस्कृतप्रबन्धप्रेषणाय मां पुनः पुनः प्राचोदयत्। किन्त्वहो! वारं वारं तच्चोदनखनित्राभिहतोऽप्येष मानवमरुः स्वल्पं दातुमपारयत् स्वकीयप्रबन्धनीरप्रवाहम्। तथापि मित्रवत्सलः स प्रोत्साहनात् न व्यरमत्।

तेनैवमसकृत् समुत्साहितो मासात् पूर्वमेकं प्रबन्धं विरचय्य तदन्तिके प्रैषयम्। तमवाप्य सानन्दः स मां पुनरपरमेकं लेखितु-मुपादिशत्। अहो! अधन्येन मया न ज्ञातं भूलोकाच्चिरापसृतं तमेवोपजीव्य तस्य स उपदेशो मया पालयिष्यत इति।

इदानीं स्वयोग्यतया राजकीयसंस्कृतविद्यालयस्य परिचालक-समितेरन्यतमसदस्यत्वेन संस्कृतोपाधिपरीक्षायाश्चान्यतमप्रश्नपरिदर्शक-

त्वेन निर्व्वाचितस्य तत्तत्कर्म्मवशान्नित्यं विद्यालयभवनं समागच्छतस्तस्य चिरसौम्यमूर्त्तेरसकृद्दर्शनं तत्पाठागाराश्रितस्य मे स्वायत्तं सञ्जातम्। केन वा ज्ञातं तस्यैतदनेकदर्शनं निर्व्वाणोन्मुखदीपप्रभेव चिरादर्शनाय कल्पिष्यत इति। संस्कृतोपाधिपरीक्षायाः प्रश्नपरिदर्शकपदं गृहीत्वैव तेन यादृशो न्यायानुरागः प्रदर्शितो लोकेषु स विरलतयैव दृश्यते। विश्वविद्यालयरत्नभूतं स्वकीयभ्रातुष्पुत्त्रं श्रीमन्तमशोकनाथं वर्षेऽस्मिन् वेदान्तोपाधिपरीक्षार्थिनमवगम्य तीक्ष्णधियस्तस्य परमसाफल्ये जातप्रत्ययोऽपि यदि तत् साफल्यं पितृव्यस्यात्मनः प्रश्नपरिदर्शकतया लोकचित्तेषु कमपि मिथ्यासंशयमुत्पादयेदिति विचिन्तयन् स तं तच्चेष्टनान्न्यवर्त्तयत्। अहो दौर्भाग्यं संस्कृतपरीक्षासमितेर्यत् तत्कर्म्मसहाय एवंविधो जनोऽकाल एव विनष्टः।

यस्मिन् खलु दारुणदिवसे स मर्त्यलीलां व्यजहात्, तत्पूर्वाह्णे सायं स्वकर्म्मवशेन तत्पल्लीं गतस्तद्भवनपुरोद्वारस्थं तं विश्वविद्यालयान्यतमाध्यापकेन श्रीयुत-चितीशचन्द्रचट्टोपाध्यायेन सह सम्भाषमाणमपश्यं, तत्समीपमुपागतश्चाकर्णयं तस्यैतदन्तिमसुस्नाहवचनम्—"अग्रज, मा त्याक्षीः संस्कृतलिखनाभ्यासं, मा च शङ्किष्ठा अस्मत्पत्रिकायां स्वप्रबन्धाप्रकाशनम्। यदेव त्वया लेखिष्यते, तदेवास्माभिरविचारितं ग्रहीष्यत" इति।

तस्यामेव रजन्यामकस्मात् सन्न्यासरोगाक्रान्तश्चिरपुण्यशीलतया रोगयन्त्रणामननुभवन् कतिपयहोरामात्रं लुप्तसंज्ञत्वेन विद्यमानो विफलीकृतसर्वभिषक्प्रयत्नो बन्धुजनैरज्ञातः प्रत्यूषसि परलोकं प्रस्थितः। यं निरामयसबलशरीरमीक्षमाणा रजनीह सुखेन पदमकार्षीत् तमेव दुश्छेद्यकालपाशबद्धमवलोकयन्त्यतिदुःखेनान्तर्हिता। तथापि ज्योतिष्मतस्तस्य चिरप्रफुल्ले वदने न्यूनतया न लक्षितं किमपि मायाविकारमालिन्यम्। अथवा साधारणज्ञानागम्योऽयं लोकोत्तरचरितानां लोकान्तरगमननियमः।

हा जननीमानरक्षणैकव्रत गीर्वाणवाणीवरपुत्र, कठोरनव्यकरपीड्यमानां तां वाणीं को वा रक्षिष्यति साम्प्रतं त्वत्सादृशोचितेनात्मजीवनसमुत्सर्गेण ? हा संस्कृतसाहित्यपरिषद आजन्महितकारिन्, त्वया विरहितामसहायां तां क इदानीं प्रतिपालयिष्यति त्वत्सादृशोचितेन जीवितपणेन ? हा प्रकृष्टज्ञानकर्म्मविटपप्रसारिन् महाद्रुम, तवैतस्मादकालपतनादधुना कमेवाश्रयिष्यन्ति तत्त्वच्छायान्वेषिणः संसारपथिकाः ? हा चारित्रसौजन्यसुधाकर वङ्गाकाशपूर्णचन्द्र, त्वयेदानीं त्यक्तां तिमिरावृतां वङ्गावनीं को वा पुनः समुल्लासयिष्यति विमलयशःकिरणेन ? हा अविरलप्रणय-सेक-तर्पितमित्रहृदय प्रेमाम्बुनिधे, सम्प्रति सन्तापवारणाय कमेव वोपगमिष्यन्ति भव-दाव-दग्धास्ते सुहृज्जनाः ? हा निखिलसद्गुणैकमहानिलय, इदानीं त्वामनवेक्षमाणास्ते खलु गुणाः क्व पुनः प्राप्स्यन्ति तेषामेकं शरणम् ? हा दुर्भगवङ्गजनन्याश्विराश्वासहेतो प्रियनन्दन, अकाले त्वामपहरता कालेन नूनं समुच्छिन्नं तस्याः सर्व्वं मनोरथमूलम्। हा सनातनधर्म्मपालक सरलसौम्यमूर्त्ते भूसुरमणे, पापकुटिलायामत्रावनौ चिरावस्थानमनिच्छता किं त्वयैवं झटित्यपसृतम् ? क्व नु भोः प्रस्थित एतान् शोकविधुरचित्तान् स्वजनसुहृदाश्रितजनान् विहाय ? परमपुण्येन त्वया साम्प्रतमधिगतो यः खलूर्द्ध्वलोकः, कुरु तस्मात् क्षेमङ्करं दृष्टिप्रसादं निम्नस्थामेतामसमापितकार्य्यां कर्म्मभूमिं समुद्दिश्य। यद्यपि विलयं गतं ते नश्वरं भौतिकशरीरम्, अविनश्वरं ते भास्वरं यशोवपुरालोकस्तम्भ इव सुचिरं तिष्ठन्नूनमालोकयिष्यति गीर्व्वाणवाणीसेवनव्रतानां वङ्गीयानां घननैराश्यतमःसङ्कुलं क्षीणमार्गम्। एतदेव हि शोकभरपीड्यमानाया वङ्गजनन्या एकं समाश्वासनं वर्त्तते।

---

# पशुपतिस्मरणम्

[ निबन्धकः—श्रीशिवदासवन्द्योपाध्याय-विद्याविनोदः एम् ए ]

समदशवर्षव्यापी आसीत् शोच्याकालमृत्युना शास्त्रिमहोदयेन सह मम परिचयः। प्रथमपरिचयस्तु आवयोः समजनि संस्कृतकलेजाख्ये विद्यागारे, यत्राहमभवं तदा तृतीयवार्षिकश्रेण्याम् पाठकः। तस्य खलु सौम्यकान्तिः विद्यावत्ता विनयः अक्रोधश्च मच्चित्तं तस्मिन् तदेव नितरामाकृष्टमकुर्वन्। मन्ये 'विद्या ददाति विनयम्' इति वाक्यस्य सार्थकतां कर्त्तुकाम इव निरमात् शास्त्रिमहोदयं धाता। तद्गुणगणाकृष्टमानसः खलु अहं कृतवाक्यालापस्तेन सार्द्धमात्मानं चरितार्थममन्ये। तस्मात् कालादारभ्य सम्पदि विपदि दशाविपर्य्यये ननु सर्व्वास्ववस्थासु एव एतावन्तं कालम् अक्षुण्णोऽतिष्ठदावयोः परिचयः। यदैव मे प्रयोजनमासीत् सत्परामर्शस्य, तदैवासौ कार्य्यव्यापृतोऽपि चिन्ताकुलाकुलचित्तोऽपि अन्वग्रहीन्मां सत्परामर्शप्रदानेन। तेन सह सकृत् कृतालापोऽपि जनो ह्यभवदाकृष्टस्तस्मिन् गुणैर्विविधैस्तदीयैः। अधिगतपाश्चात्यशिक्षोऽपि ब्राह्मणवंशसम्भूतः सौम्यसुन्दरकान्तिर्मूर्त्तिरिव विनयस्यासौ शास्त्रिमहोदयः सदैव शास्त्रपरिदर्शितात् वर्त्मनो रेखामात्रमपि पदं न व्यत्येत्। स खलु एम्-ए परीक्षामुत्तीर्णः कियन्तं कालं वङ्गवासीकलेजाख्ये विद्यागारे संस्कृताध्यापनामकरोत्। तस्मिन्नेव काले तस्याध्यापनाचातुर्य्येण विनयमण्डितपाण्डित्येन च सर्व्व एव छात्रास्तदीया मुग्धा अभवन्, इति मया श्रुतं स्वकर्णाभ्याम्। ततः त्यक्ततत्पदोऽसौ चिरस्मरणीयेन आशुतोषमुखोपाध्यायसरस्वतीमहोदयेन प्रतिष्ठापिते कलिकाताविश्वविद्यालयस्थे पोष्टग्राजुयेटाख्ये विभागे एम्. ए. अध्यापकस्य पदे नियुक्त इयन्तं कालं योग्यतया तत्कार्य्यमकरोत्। तत्रापि तस्य विनयपाण्डित्यमण्डिता खलु अध्यापनाचातुरी नितरां प्रशंसिता

च्छात्रैः। सर्व्वजनैरनादृतायाः तपस्विन्या आर्य्यभाषायाः प्रनष्टगौरवं पुनरेव तां प्रापयितुकामः शास्त्रिमहोदयोऽसौ उपेक्षितनिजस्वास्थ्यो विपुलं परिश्रमं कृत्वा अनन्यमनाः संस्कृतसाहित्यपरिषदः प्रतिष्ठापनेन तस्या उन्नतिविधानेन च अक्षयां कीर्त्तिमलभत। तस्य अनन्यसाधारणतया एवासौ अशक्नोत् कार्य्यमेतत् सम्पादयितुम्।

कलिकाताविश्वविद्यालयो यथा सुचिरं निजाङ्के स्यर् आशुतोषस्य कीर्त्तिं धारयिष्यति, संस्कृतसाहित्यपरिषदपि नूनं तथैव शास्त्रिमहोदयस्य कीर्त्तिं चिरं जगति प्रचारयिष्यति। शास्त्रिमहोदयो यथाशक्ति परिचितापरिचितनिर्विशेषेण उपकारकरणे कदापि पश्चात्पदो नासीत्। तस्य परलोकगमनात् प्रागेव महेशीयः कश्चित् पण्डित एकस्मिन् विद्यागारे पदमेकं प्राप्तुकामः तत्साहाय्यमयाचत, शास्त्रिमहोदयोऽपि तद्योग्यतां दृष्ट्वा अपरिचितायापि तस्मै यथाशक्ति साहाय्यम् प्रत्यशृणोत्। कियन्ति दिनान्यतीतानि असौ मस्तकाश्रमागत्य तत्परलोकगमनसंवादेन नितरां निर्विन्नः तत्साहाय्यलाभात् वञ्चितमात्मानमेव पुनः पुनरनिन्दत् मत्पुरतः। सन्त्येवं भूयांस्येव निदर्शनानि परोपकारस्य शास्त्रिमहोदयानाम्। दृष्ट्वैव तं तस्मिन् एते गुणा वसन्ति। विविधासु भाषासु परं व्युत्पन्नश्चासौ इति निर्णेतुं नाशक्नोत् कदापि जनः। जार्म्मन्यभाषायां फ्रेञ्चभाषायाञ्च तस्य भूयान् अधिकार आसीत्। जार्म्मन्यभाषायां प्रवेशं लब्धुकामानां सौकर्य्यसाधनं तल्लिखितं पुस्तकमेव तस्य अध्यापनानैपुण्यस्य प्रकृष्टप्रमाणम्।

शास्त्रिमहोदयस्य चेतसि कदापि प्राकृतजनसुलभा ईर्षाक्रोधादिदोषाः प्रवेशं नालभन्त। नाहं तं कदापि क्रोधोद्दीप्तमपश्यम्। यावत् स्थास्यति गौरवं संस्कृतभाषायाः नाम च संस्कृतसाहित्यपरिषदः, तावच्च मन्ये प्रत्यक्षदृष्ट इव भविष्यति परलोकगतोऽपि शास्त्रिमहोदयः सर्व्वेषामेव सुधियां मानसपटे। श्रद्धेयस्य शास्त्रिमहोदयस्य स्मृतिं प्रति अखोमपि श्रद्धां प्रदर्शयितुं प्राप्तावसरो मन्ये कृतार्थमात्मानम्।

# पशुपतिनाथस्मृतिः

[ स्मर्त्ता—श्रीहाराणचन्द्रशास्त्री ]

साम्प्रतमकाण्डे परलोकं प्रस्थितवतां कीर्त्तिमात्रावशेषाणां पशुपतिनाथशास्त्रिमहाशयानां मातामहाः पण्डितप्रकाण्डकालीकुमारवाचस्पतिमहाभागा गिरिजापतिप्रियवसतिं वाराणसीमध्यवात्सुः। अस्मदीयाध्यापनसमये च नामावशेषितानामपि तेषां पूज्यपादैः परकीयगुणग्रहणैकप्रणयिभिरस्मद्गुरुवरैस्तत्रभवद्भिर्महामहोपाध्यायशिवकुमारमिश्रशास्त्रिचरणैरनेकशः सादरं नामाग्रह्यत, तथा तदीयोत्तमतपोनिष्ठायाः पाण्डित्यप्रकर्षकाष्ठायाश्च स्वरूपमस्माद्दशविद्यार्थिनामुद्धाहाय सवहुमानं सश्रद्धं चानेकधा पुनः पुनरवधार्य्यत। गुरुचरणानां वचनैरेव मे वाचस्पतिमहाभागानामुपरि गाढ़ा भक्तिरभूत्। ततः परं पशुपतिनाथशास्त्रिमहाशयानां दर्शनावधि मनसि मम समभवदिदं यन्मातामहतपोनिष्ठेव मूर्त्तिमती परममधुरया सौजन्यविनयपूतयाऽनयाऽऽकृत्या विपरिणामं गतेति।

कदाचिद् [ १९२० तमे खृष्टवर्षे ] अहं महामहोपाध्याय-पण्डितप्रवरश्रीयुतलक्ष्मणशास्त्रिमहाशयानां प्रतिनिधित्वेन कलिकाताराजकीयसंस्कृतमहाविद्यालये कलिकाताविश्वविद्यालये चाध्यापनायामधिकारिभिराहृतस्तत्र कियन्तञ्चित् कालमनयम्। तस्मिन्नेवावसरे शास्त्रिवर्य्यैः पशुपतिनाथमहोदयैस्तदानीं कलिकाताविश्वविद्यालये संस्कृताध्यापनायां नियुक्तैः परिचयः समजनि। तदाप्रभृत्येव ते स्वाभाविकेनौदार्य्यगुणेन स्वयमेव मदीयां परमां मैत्रीमुररीकृतवन्तः। पवित्रमधुरचारित्रगुणेन स्वाभाविकधीरतया स्वकीयपाण्डित्यप्रकर्षेण हृदयङ्गमया मूर्त्या वाचा च ते न केवलं मदीयां प्रीतिपात्रतामगमन्, अपि तु सर्व एव सहृदयधुरीणाः सज्जनाः प्रस्फुटितेषु कमलाकरेषु मधुकरा इव तेषु प्रेमभावेन समाकृष्टमानसा आसन्निति निश्चयः। एतेषां शास्त्रिमहाशयानां मीमांसाशास्त्रेऽन्यत्र च विषये प्रशस्यतमं गम्भीरतरञ्च पाण्डित्यप्रागल्भ्यमभवदिति तन्निर्म्मितमीमांसाविषयकनिबन्धरत्नं [ Introduction to the Purva Mimamsa ] समालोचयतां पण्डितधुरन्धराणामतिरोहितमेव।

अहो दुर्दैवमस्माकं संस्कृतसेविनाम्! अहो दुर्भागधेयं संस्कृतसरस्वत्याः! संस्कृतसरस्वती संस्कृतवाणीसेविनश्च ईदृशैः स्नेहपरायणैः कल्याणैकचिन्तकैर्विनयैकपात्रैरकालिममित्रैर्दिनाकृताः शोच्यां दशामनुभवन्ति।

"पूरोत्पीड़े तड़ागस्य परीवाहः प्रतिक्रिया।
शोके क्षोभे च हृदयं प्रलापैरेव धार्य्यते॥"

इति सम्प्रति शोकक्षुभितानामस्माकं विलाप एव शरणम्।

मातर्भारतभारति प्रतिदिनं शोच्यां दशां गच्छसि
श्रेयस्ते प्रतिहन्यमानमनिशं संदृश्यते सर्वतः।
ये केचिद्भवतीमतीव महतीं वद्धादराः श्रद्धया
सेवन्ते जगतीतले परिभवस्तेषामनल्पो ध्रुवः॥

———

# शोकसभा

फाल्गुनस्य तृतीयदिवसे बृहस्पतिवासरे संस्कृतसाहित्यपरिषदः समुद्योगेन तदन्यतरमन्त्रिणाम् अचिरपरेतानां डाः पशुपतिनाथशास्त्रिणां कृते कापि शोकसभा 'एल्वार्टहल्' इत्याख्यसाधारणप्रतिष्ठानगृहे समाहूता समभवत्। तत्र वङ्गविषयमन्त्रिणां सार् प्रभासचन्द्रमित्रमहोदयानां सभापतित्वं मृतमहात्मनः सर्वजनप्रियत्वमसंशयमाख्यत् सभाकर्मनिर्वाहविधौ निर्वाचितमासीत्। तत्र बहुमान्याः सर्वजनविश्रुताः कीर्त्तिधन्या महात्मानो बहव एव समुपस्थिताः, तेष्वपि अधोलिखिता विशिष्टतमाः,—श्रीयुक्त सार् देवप्रसादसर्वाधिकारी, डाः आदित्यनाथमुखोपाध्यायः, पञ्चाननियोगी, सतीशचन्द्रगिरिः, मन्मथनाथमुखोपाध्यायः, प्रभुपादः अतुलकृष्णगोस्वामी, निशिकान्ततर्कतीर्थः, राधारमणविद्याभूषणः, डाः वारिदवरणमुखोपाध्यायः पञ्चाननतर्कवागीशः, शरच्चन्द्रसांख्यतीर्थः, सुभाषचन्द्रवसुः, डाः विधानचन्द्ररायश्च। अनेके एव मृतमहात्मनः साधारणविलक्षणान् गुणोत्करान् स्मारं स्मारं स्रवदस्रवः सन्तः समागतान् सभ्यानपि सिक्तनेत्रानकार्षुः। पाश्चात्यशिक्षादीक्षाव्याक्षिप्तचित्ता अपि अनेके एव तत्तत्शोकप्रकाशावसरे संस्कृतभाषायाः तथा तत्सेवकत्वेनाभिमन्यमानायाः संस्कृतसाहित्यपरिषदश्च अनन्यसाधारणमुपयोगित्वमङ्गीकृतवन्तो निरर्गलमाकण्ठतः। स्थानसंक्षेपात् वक्तृसमूहवैखरीणां सारांशानप्युद्धर्त्तुमक्षमाः

क्षमापयामो भवतः पाठकान्। प्रायेण निशाया नवमघटिकायां सभापतेरभिभाषणात् परं गृहीतधन्यवादास्ते सभामभाङ्क्षुरिति शम्।

## शोकसभा

फाल्गुनस्य चतुर्थदिवसे शुक्रवासरे सायं षष्ठघटिकायां "वाग्-वाजारपल्ली"स्थानां जनसमाजानामाग्रहातिशय्येन देशबन्धुपार्कं इत्याख्योद्याने सर्वजनकीर्त्तितानां देशसेवकधुरीणानां श्रीमतां विभावसूनामिव सुभाषवसूनामाध्यक्ष्येण काचित् शोकसभा समनुष्ठिता। अनतिक्रान्तशोकसभासमुदाचारैस्तत्रत्यैः सुहृत्तैरेकपल्लीवास्तव्यानां तत्रभवतां डाः पशुपतिनाथशास्त्रिणां परलोकप्रयाणे हार्दं दुःखसम्मर्दमावेद्य कश्चित् प्रस्तावः परिगृहीतः। अभिभाषणावसरे सभापतिभिरभ्यधायि यत् 'साहित्यपरिषत्सेवै'व वस्तुगत्या पशुपतिसेवेति मन्वानैस्तत्रभवद्भिर्यदि तदर्थमुद्योगेत तदैव तेषामुपरतानामनारतं स्मृतिर्भवद्भिः सुरक्षिता भवेद् इति।

## शोकसभा

( पञ्चनदीय-हरियाणशेखावाटीब्रह्मचर्य्याश्रमस्य )

माननीय-मन्त्रिमहोदयाः! चैत्रकृष्णसप्तम्यां भौमवासरे मध्याह्नोत्तरं भिवानीस्थे "श्रीहरियाणशेखावाटीब्रह्मचर्य्याश्रमे" संस्कृतसाहित्य-परिशीलिनां नगरिकाणां छात्राणां विदुषाञ्च, श्रीमद् विश्वम्भरनाथ-शास्त्रिणां सभापतित्वे एम्. ए. पि-एच्. डी. महोदयानां पशुपति-नाथशास्त्रिणां स्वर्गप्रयाणवृत्तमाख्यं शोकसमितिर्जाता। तत्रैते उल्लेख्याः विद्वांसः सभामलङ्कृतवन्तः:—

श्रीमान् काशीनाथशास्त्री श्रीमान् रामप्रसादशास्त्री श्रीमान् कन्हैयालालशास्त्री श्रीमान् देवानन्दशास्त्री श्रीमान् पुष्करदत्तशास्त्रि-प्रभृतयः। तत्र सर्वसम्मत्या यः प्रस्तावो जातः स प्रहीयते, आशासे च यत्तत्रभवन्तस्तं संस्कृतसाहित्यपरिषदि श्रावयिष्यन्ति।

समितिरेषा स्वर्गीय-पशुपतिनाथशास्त्रिणाम् एम्.ए. पि-एच्.डी.

महोदयानामकाले स्वर्गं प्रति प्रस्थानं समाकर्ण्यातीव दुःखं प्रकटयति ।

एते हि महाभागाः पुण्येऽस्मिन् भारते वर्षे समासाद्य जन्म स्व-जनुषैवारभ्य संस्कृतसाहित्यस्य महतीमुन्नतिं कृतवन्तः। कैश्च न विज्ञायते यत्त एव महामान्याः संस्कृतसाहित्यपरिषदः कियद्दिनानन्तर-मेव स्वीकृत्य प्रधानपरिचालकत्वं तस्याः सर्वतः प्रचारेण क्रमेण सम्पा-दितवन्तोऽत्यर्थं समुन्नतिमस्याः ।

अन्ते च सम्मेलनसमागतेभ्यो नरपुङ्गवेभ्यः सम्माननं प्रदर्श्य भगव-च्चरणारविन्देषु दण्डवत् प्रणम्य प्रार्थयामहे भवतु तेषामक्षयो वासः स्वर्गे कीर्त्तिश्च धरणीतले इति शम् ।

मन्त्री भिक्षालालशास्त्री ( हिसार, पञ्चनद )

## शोकसभा

### [ अमरस्मृतिसमितिः ]

फाल्गुनस्य सप्तविंशदिवसे रविवासरे सायं षष्ठहोरायाम् "अमर-स्मृतिसमिति"रित्याख्यप्रतिष्ठानस्य समुद्योगेन डाः पशुपतिनाथ-शास्त्रिणः अकालपरलोकगमने शोकप्रकाशार्थमाहूता काचित् सभा परिषद्भवने एव। तत्र मूलाजोड़संस्कृतकलेजाध्यक्षाः श्रीमन्तो निशिकान्ततर्कतीर्थमहोदयाः सभापतिपदमध्यासीना आसन्। तत्र पूर्वोक्तसमितेरुद्योक्तारः स्वर्गतस्य पशुपतिनाथस्याकालमृत्यौ शोकं प्रकाशितवन्तः। अनेके एव मृतमहात्मनो गुणानुरीकृत्य गभीरं शोकसम्भारमुदैरयन्। शोकप्रकाशावसरे श्रीयुक्तकालीपदतर्काचार्य्येण "परिषत्परिपोषणमेव पशुपतेस्तर्पण"मिति सोपपत्तिकमभिहिताः अमरस्मृतिसमितेः सभ्या"स्तदर्थमस्माभिः प्राणैः पणैर्यतिष्यते" इति प्रत्यशृण्वन्। सभापतेरभिभाषणात् परं दत्तधन्यवाददक्षिणैस्तैः सभा-कृत्यमुपसंहृतमिति शम्।

## शोकसभा

### [ काशीस्थ-भारती-समितिः ]

अतीतायां माघकृष्णतृतीयायां त्रिवादनसमये महामहोपाध्याय-

श्रीयुतप्रमथनाथतर्कभूषणमहाशयानामाध्यक्ष्येण वाराणस्यां नाटोरेश्वर्य्या महाराज्ञ्या भवान्या जयभवानीमन्दिरे संस्कृतसाहित्यपरिषदन्यतरसम्पादकस्य कलिकाताविश्वविद्यालयाध्यापकस्य प्राच्यपाश्चात्त्यविद्याविदग्धस्य विविधविरुदावलीविराजमानस्य माननीयस्य पशुपतिनाथशास्त्रिणः स्वल्पकालपरलोकप्रयाणे शोकप्रकाशनाय "भारतीसमिति"र्बभूव विशेषाधिवेशः। तत्र म.म. श्रीयुत-लक्ष्मणशास्त्री, म.म. श्रीयुत-वामाचरणन्यायाचार्य्यः, श्रीयुत-श्रीशङ्करतर्करत्नप्रमुखा ब्राह्मणपण्डिताः, रायबाहादुर-श्रीयुत-यतीन्द्रमोहनसिंह बि. ए. प्रभृतयः पाश्चात्त्यभाषाशिक्षिताश्च बहवः सामाजिकाः समुपस्थिता आसन्। पण्डितप्रकाण्डेन श्रीयुतपञ्चाननतर्करत्नमहाशयेन स्वयमागमनश्रममसहमानेन पुत्रद्वारा पत्रमयमभिमतं प्रेषितम्। स्वामिना श्रीमता शुद्धानन्देन संस्कृतपरिषदन्यतरसम्पादकेन श्रीमता गोष्पतिकाव्यतीर्थेन सभापतितर्कभूषणमहाशयैश्च कृतं खलु पूतचरितानां शास्त्रिमहाशयानां गुणगणप्रद्योतकं व्याख्यानम्। भारतीसमितिसम्पादकेन श्रीमता हरिहरशास्त्रिणा शारीरास्वास्थ्यहेतोः सभास्थले समुपस्थातुमक्षमेण छात्रद्वारा प्रेरितमधोलिखितं पद्यं सभाध्यक्षाणामादेशेन वाचितञ्च।—

सकलगुणगरिष्ठः साधुकर्म्मैकनिष्ठः
स्मर इव सुकुमारः कार्त्तिकेयावतारः।
ननु किममरनाथामन्त्रणं प्राप्य सद्यो
वत पशुपतिनाथः स्वर्गलोकं प्रयातः॥

अन्ते सर्वसम्मत्या प्रस्तावोऽयं परिगृहीतः—"इयं खलु भारतीसमितिर्विशेषाधिवेशे गभीरमान्तरं शोकं प्रकाशयति स्वर्गगतानां निसर्गमधुरव्यवहाराणां विविधविद्याविद्योतमानानां गीर्वाणवाणीप्रियतमसन्तानानां सुगृहीतनामधेयानां पशुपतिनाथशास्त्रिणामाकालिकशरीरपाते, अद्यतनसमित्यधिवेशकार्य्यविवरणं च प्रेषणीयं संस्कृतसाहित्यपरिषत्कर्म्माध्यक्षेषु तथा शास्त्रिमहाशयानां परिजनेषु।"

# सर्वतन्त्रसिद्धान्तपदार्थलक्षणसंग्रहः ।

भिक्षु गौरीशङ्करेण संगृहीतः, द्वितीयावृत्तिः । मूल्यं ॥)

ग्रन्थेऽस्मिन् वेदवेदाङ्गदर्शनस्मृतिपुराणकाव्यसाम्प्रदायिकादि विविध-शास्त्रप्रतिपादितपदार्थानां २७०० लक्षणानि सन्ति, एवंविधः सर्वविष-योपकारको लाक्षणिकनिबन्धोऽद्यावधि केनापि न विहितः ।

अपरञ्च काशी-कलिकाता-मैसूर-काञ्ची-कुम्भकोण-काश्मीर-नेपाल-यूरोपादि-देशवासिभिर्बहुभिः सुधीभिरस्य सङ्ग्रहस्य प्रामाणिकत्व-मङ्गीकृतम् ।

प्राप्तिस्थानम्—मनभरीदेवी
ग्रामश्च पुठी पत्रालयं जमालपुरं, प्रदेशो हिस्सारः ।

---

## संस्कृतसाहित्यपरिषद्ग्रन्थमाला

### मुद्रापिता ग्रन्थाः

| | | मूल्यम् | | | |
|---|---|---|---|---|---|
| २ । | कालीतन्त्रम्—सटीकानुवादम् | साधारणानाम् | ॥/०) | सदस्यानाम् | ॥०) |
| ३ । | शङ्करीसङ्गीतम् | ,, | ।/०) | ,, | ।/०) |
| ४ । | मुक्तिवादः—गदाधरभट्टाचार्यविरचित, सटीकाद्वय-भाष्यानुवादसहितः | ,, | २) | ,, | १॥० |
| ५ । | दुर्गोत्सवतत्त्वम्—रघुनन्दनभट्टाचार्यकृतम्, शारदीयदुर्गोत्सवप्रमाणप्रयोगतत्त्वरूपम् | ,, | ।।० | ,, | ।० |
| ६ । | पितृदयिता—अनिरुद्धभट्टकृता, सामवेदीयसन्ध्या-श्राद्धादिपद्धतिरूपा | | १।०) | ,, | १) |
| ७ । | दुर्गोत्सवनिबन्धकदम्बम्—दुर्गोत्सवविवेकादि-ग्रन्थपञ्चकात्मकम् | ,, | ॥०) | ,, | ।/० |
| ८ । | कारकोल्लासः—भरतमल्लिककृतः, सोदाहरण-कारकनिर्णयरूपः | | /०) | ,, | /०) |
| ९ । | ऋग्वेदभाष्योपक्रमणिका—सायणकृता, आङ्गल-भाषाटिप्पणसमेता | | ॥।०) | ,, | ॥/०) |
| १० । | ग्रहयागतत्त्वम्—रघुनन्दनभट्टाचार्यकृतम् | ,, | ।/० | ,, | ।/० |
| ११ । | तीर्थतत्त्वम्—रघुनन्दनभट्टाचार्यकृतम् | ,, | ।/० | ,, | ।/० |
| १२ । | प्रभाकरविजयम्—नन्दीश्वरविरचित-प्रभाकर-सम्प्रदायानुसारिमीमांसाग्रन्थः | ,, | १।०) | ,, | १) |
| १३ । | पवनदूतम्—लक्ष्मणसेनसभाकवि-धोयीकविकृतम् | ,, | ॥।०) | ,, | ॥/०) |

| | | मूल्यम् | | |
|---|---|---|---|---|
| १४। | नलदमयन्तीयम्—( सप्ताङ्कनाटकम् ) श्रीकालीपदतर्काचार्य्यकृतम् „ | १।०) | „ | १) |
| १५। | प्रशस्तपादभाष्यम्—जगदीशसूक्तिसहितम्, नवीनया सूक्तिदीपिकया भाषाभाष्येण च समलङ्कृतम् | २) | „ | १॥) |
| १६। | यात्रातत्त्वम्—रघुनन्दनभट्टाचार्य्यकृतम्, विष्णो रथयात्रादिद्वादशयात्रा-पद्धतिरूपम् | १) | „ | ॥) |
| १७। | ऋक्प्रातिशाख्यम्—उवटभाष्यानुसारिख्या व्याख्यया समेतम् | २।० | „ | २) |
| १८। | प्रमेयरत्नावली—बलदेवविद्याभूषणकृतो वैष्णवदर्शनग्रन्थः | १।० | „ | १) |

## मुद्राप्यमाणा ग्रन्थाः

१। आनन्दलतिका ( चम्पूकाव्यम् )—दम्पतिभ्यां जयन्तीकृष्णनाथाभ्यां विरचिता।

२। छन्दोगमन्त्रभाष्यम्—भट्ट-गुणविष्णुकृतम्।

## मुद्रापणार्थं गृहीता ग्रन्थाः

१। समञ्जसा—अनूपनारायणकृता ब्रह्मसूत्रवृत्तिः।

२। उद्वाहतत्त्वम् ( रघुनन्दनभट्टाचार्य्यकृतम् )।

३। भाषारत्नम्—अभिनवकणादकृतम्।

१८५० शकाब्दे १०म-वर्षस्य

# संस्कृतसाहित्यपरिषत्

संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम्

कलिकाता श्यामबाजारस्थ—
संस्कृतसाहित्यपरिषद्भवनात् प्रकाश्यते




सम्पादकः—श्रीकालीपदतर्काचार्य्यः

सह-सम्पादकः—श्रीदुर्गामोहनभट्टाचार्य्यः एम्. ए.

वार्षिकमूल्यम्—३) रूप्यकत्रयम्

निरसनार्थं तत्रैव नीलकण्ठीयटीकायाम्—ऋचीकस्यात्मज इति अत्रा-जीगर्त्तात्मज इति बोध्यम्। 'सोऽजीगर्त्तं सौयवसिमृषि अशनाया परीतम्। तस्य ह पुत्रा: आसु: शुन:पुच्छ: शुन:शेप: शुनोलाङ्गूल' इति श्रुते:। शुन:शेपस्य पिताजीगर्त्त इत्यवगमात् कल्पान्तराभिप्रायो वेदं ज्ञेयमिति नीलकण्ठोक्तमेव बहु मन्यामहे।

---

## गुरुशिष्यसंवाद:

( पूर्वतोऽनुवृत्त: )

[निबन्धक:—श्रीशरत्कमलन्यायस्मृतितीर्थ:]

द्वितीयशिष्य:। स्यादेतत्—गर्भाधाने विहितमग्न्यादि श्रोतुमिच्छाम:।

गुरु:। श्रूयतां, तच्चैतदुक्तम्—

"वृषसिंहधनुर्मीनकुम्भवृश्चिकभेषु च।
शुभेषु शुभदृष्टेषु गर्भाधानं शुभावहम्॥"

शुभयुक्तदृष्टेषु वृषादिलग्नेषु तथा जीवगृहस्थधनुर्मीनलग्नयोश्च गर्भाधानं शुभावहमिति। अपि च गर्भाधाने विशेषलग्नज्ञानमाह सत्कृत्यमुक्तावल्याम्; यथा—

पापासंयुतमध्यगेषु दिनकृल्लग्नचपास्वामिषु
तद्द्यूनेष्वशुभोज्झितेषु विकुजे च्छिद्रे विपापे सुखे।
सद्युक्तेषु त्रिकोणकण्टकविधुष्वायत्रिषष्ठान्विते
पापे युग्मनिशास्वगण्डसमये पुंशुद्धित: सङ्गम:॥

अयमर्थ:—गर्भाधानकालीनाश्चन्द्ररविलग्नाश्चेदपापयुक्ता: ( गर्भाधानकालीनश्चन्द्रो रविर्लग्नश्चाऽपापयुक्तश्चेदित्यर्थ: ) तथा अपापमध्यगता: स्यु:, अपि च तेषां सप्तमस्थानं यदि पापग्रहाऽनधिष्ठितं भवेत्, तथा लग्नादष्टमे मङ्गलश्चतुर्थे चेत् पापग्रहो न वर्त्तेत, केन्द्रे त्रिकोणे च शुभग्रहाधिष्ठिते, शुभयुक्ते चन्द्रे पाप-

ग्रहाऽनधिष्ठितेषु तृतीयषष्ठैकादशस्थानेषु, अगण्डसमये षोड़श-दिनाभ्यन्तरे पुंसश्चन्द्रताराशुद्धौ न गर्भाधानं शुभं विशेष-मावहतीति ।

तृतीयशिष्यः । गण्डसमयः कीदृश इत्यवगन्तुमिच्छामः ।

गुरुः । कथ्यते—तथाहि गर्भाधानमुपक्रम्य पठितम्—

"मूलामघाऽश्विनीनामाद्यं ज्येष्ठाश्लेषसर्पाणाम् ।
अन्त्यं गण्डपदं त्यक्त्वा षोड़शाहे ऋतौ व्रजेत् ॥" इति

मूलाया मघायास्तथा अश्विन्याश्चाद्यः पादः, ज्येष्ठाया रेवत्या अश्ले-षायाश्च शेषः पादो गण्डसमयः कीर्त्तित इत्यर्थः । पापाऽसंयु-तेति पूर्व्वोक्तसमयपालनसशङ्कवता पुरुषेण खलु गण्डसमय एतादृशोऽवश्यं वर्जनीय इति तात्पर्य्यम् । अत्राप्यशक्तौ विशेष-माह भुजवलभीमे । यथा—

अन्त्यं पौष्णेन्द्रसर्पाणामाद्यं पित्र्यऽश्विमूलगम् ।
गण्डं दण्डद्वयं ख्यातं सर्व्वकार्य्येषु कल्पितम् ॥

ज्येष्ठाश्लेषारेवतीनामन्त्यं दण्डद्वयं मघाश्विनीमूलानामाद्यं दण्डत्रय-मवश्यं परिहरणीयमित्यर्थः । अत्र प्रतिप्रसवमाह व्यवहार-चमत्कारे गर्गो यथा--

"लग्नस्थो वा सुतस्थो वा धर्म्मस्थो वा वली गुरुः ।
प्रोक्तर्क्षे शुभवारे च धारयेद् गर्भमुत्तमम् ॥
लग्नात्मजेशौ संयुक्तावन्योन्यञ्चापि वीक्षितौ ।
क्षेत्रे परस्परस्थौ वा पुत्रयोगा इमे स्मृताः ॥"

अयमर्थः—गर्भाधानलग्ने, अथवा लग्नात् पञ्चमे नवमे वा स्थाने यदि वलवान् वृहस्पतिस्तदा गर्भाधानविहिते नक्षत्रे शुभवारे कृतं गर्भाधानं शुभमावहति । अपि च गर्भाधानलग्नाधिपतिस्तत्-पञ्चमाधिपतिश्चेदुभावेकराशिगतौ परस्परं वीक्षितौ परस्पर क्षेत्रविनिमयभावमुपगतौ वा स्यातां तदानीं कृतं गर्भाधानं

पुत्रफलकमित्यर्थः। ततश्चैवमवस्थायां पूर्वोक्तविशेषशुद्धग्रादि न तादृशमपेक्षणीयमित्यर्थोऽयं प्रतिप्रसव इत्यभिप्रायः।




---

## मासिकसभा

फाल्गुनस्य सप्तविंशदिवसे रविवासरे सायम् अष्टमघटिकायां परिषदो पौषमाघयोरधिवेशनद्वयं सुसम्पादितमभूत्। तत्र च श्रीमन्तो महामहोपाध्याया गुरुचरणतर्कदर्शनतीर्थमहोदयाः सभापतिपदमशून्यतां समनयन्। सम्पादिते च नवीनसम्पादकैस्तत्र-भवद्भिरमरेश्वठाकुरमहोदयैर्नूतनसभ्यनामप्रचारे, श्रीमद्भिः कालीपद-तर्काचार्य्यैः स्वर्गतानां पण्डितप्रवराणां शशधरतर्कचूड़ामणिमहोदयानां, लर्ड इत्याङ्गलपदवीमारूढ़ानां सत्येन्द्रप्रसन्नसिंहमहाशयानां, राय-वाहादुर-पङ्कजकुमारचट्टोपाध्यायमहोदयानाञ्च कृते कृतः शोक-प्रकाशः।

समनन्तरञ्च श्रीयुक्तोपेन्द्रमोहनसांख्यतीर्थमहोदयो ग्रहविलसित-मिति नामधेयं प्रबन्धं, श्रीयुक्तरामकृष्णचक्रवर्त्ती एम् ए महाशयश्च 'आर्य्याणां धर्मग्रन्थाः' इति शीर्षकं प्रबन्धं स्वयं विरचय्य अवा-चयताम्। श्रीमद्भिरक्षयकुमारशास्त्रिमहोदयैः प्रबन्धयोर्विशेषेण समा-लोचनं कृतम्। प्रायेण रात्रेर्दशमघटिकायां प्रकटीभूते सभापते-र्धन्यवादे सभाभङ्गो जातः।

---

